॥ श्रीः ॥

विद्वद्वरधनिकविनिर्मितेन

अवलोकाख्यतिलकेन समलङ्कृतम्

विद्वद्वरनाट्यविद्याधुरन्धरधनञ्जयविरचितम्

# दशरूपकम्

( नाट्यशास्त्रम् )

---

पञ्चनदीय ( पञ्जाबी ) पण्डितसुदर्शनाचार्यशास्त्रिप्रणीतया

प्रभाख्यया व्याख्यया संवलितम्

---

टीका( प्रभा )कर्त्रैव च संशोधितम्

---

तदेतत्

मुम्बईनगरे

'गुजराती' मुद्रणालयाधिपतिना मणिलालइच्छारामदेशाई-

समाख्येन स्वकीयमुद्रणालये मुद्रयित्वा

प्रकाशितम्

---

मसंवत् १९७० ॐ खिस्तसंवत् १९१४.

मूल्यमेकं रूप्यकम् ।

॥ श्रीः ॥

# भूमिका

अये गीर्वाणवाग्वाह्लिललिताल्वालकल्पा अनल्पादर्शौर्यादिकमनीयगुणगणार्णवा विद्याविन्दवो विभूपितवसुन्धराः ।

एतत्सावलोकदशम्पकपदार्थावगतौ कचित् कचित् क्लेशो भवति छात्राणामित्यालोच्य महामहोपाध्याय सी आई ई विद्यानिधिश्री ७ श्रीयुतगङ्गाधरशास्त्रिणा छात्रेण मया यथामति तत्तत्पदार्थमात्रस्फुटीकरणार्थं टिप्पणीसमकल्पेय प्रभाख्या व्याख्या सावलोकस्यैव दशरूपकस्य विरचितास्तीति मन्ये छात्राणा किंचिदुपयोग स्यादेव ।

मूलपाठोऽपि यथामति सशोधित, अथापि प्राक्तनलिखितातिशुद्धपुस्तकानुपलब्ध्या मूले कचित् कचित् सशयोपि न निवर्तते । विषयश्चाय प्राधान्येन भरतसूत्रेऽस्ति, सगीतरत्नाकरादावपि किंचिदुपलभ्यते । उदाहृतपद्यत्रास्थार्थानवबोधशून्याना चानाधिकाराभावाद्विस्तरभीत्या चोदाहृतपद्यानि न मया व्याख्यातानि अथापि चतुर्थप्रकाशे " हस्तैरन्तर्निहितवचनै " " व्यक्तिर्व्यञ्जनधातुना " इतिपद्यद्वय केवलसगीतशास्त्रसवद्धत्वात् छात्राणा क्लेशकर स्यादिति तदीयपदार्था सप्रमाण प्रतिपादिता ।

सगीतग्रन्थपदार्थावगतौ च ममोक्तश्रीगुरुचरणरूपैव कारणम् । सगीतक्रियाया च श्रीयुतनायकाऽमृतसेनमहाशयाना चरणरूपा कारणम्, श्रीयुतामृतसेनमहाशयश्च जगत्प्रसिद्धश्रीतानसेनवशे १८७०विक्रमसवत्सरे प्रादुर्भूतो न केवल स्वसमानवयस्केष्वेव किं तु वृद्धेष्वपि समानभूमि सप्राप्तो नायकपदवीमलकार सितारवाद्यप्रावीण्ये चाद्वितीय एवासीत् स च १९५० विक्रमसवत्सरे पौषकृष्णाष्टम्या स्वर्गं गत ।

चलवीणेत्यपरपर्यायस्य सितारवाद्यस्य वादनपरिपाटी च पूर्वं सूत्र तुल्यैव नातिपरिष्कृता चासीत्, अत एवास्य वाद्यस्य महत्त्वमपि नासीत्, अमृतसेननायकाना पितृपादै सुगृहीतनामधेयै रहीमसेन नायकैरेव सा परिपाटी प्रथम परिष्कृतेति सगीतकोविदेपु प्रसिद्धमेव, उक्त च तैस्तादृशपरिष्कारप्रतिपादनप्रारम्भे सगीतकोविदेभ्य 'सुहृद्वरा लोष्टमिन्म् ( सितार ) मया गृहीतमेतन्मन्ये दिव्यमणे ( ध्रुपदस्य ) सदृश सपाद्य प्रदर्शयिष्यामि ' इति तथैव च कृतम्, सूत्रसदृशसितार-वादनविद्याया रहीमसेननायका भाष्यकारकल्पा अमृतसेननायकाश्च वार्तिककारकल्पा जाता इति नात्युक्तिपरिकल्पित लपितम् । उक्त नायकाभ्यामेकदा स्वसितारश्रवणार्थं ससदि सर्पोऽप्याहूतश्चिर च तस्मै श्रावित सितारवाद्यम् । एतेषा श्रीतानसेनमहोदयमारभ्य श्रीसुखसेन नायकनामधेयरहीमसेननायकजनकपर्यन्त ध्रुवपदगानविद्यैव वशपर-म्परामलञ्चकार रहीमसेननायकमारभ्य सितारवादनविद्या प्रचलिता सम्प्रति चैषा पौत्रो निहालसेननामधेयो वर्तते अद्वितीयकुशलश्चाय सितारविद्यायाम् । अमृतसेनमहाशयश्च रहीमसेननायकाना सौभाग्य-वान् पुत्र समुत्पन्न या चतुर्दशवर्षमेवारभ्य कीर्तिशेषावस्थापर्यन्तम् ७०० सप्तशतानि मुद्राणा मासिकवेतन क्रमेण झज्झरअलवरजय-पुरनरेशेभ्योऽतिसमानेन समुपलब्धवान् । अन्यत्र चैषा गुरुवरश्रीगङ्गाधर-शास्त्रिणा च जीवनवृत्तान्त व्युत्पादयिष्यामि । तदनन्तर न खलु तादृश सगीतचमत्कारो नैसर्गिकविनयादिपरिष्कारश्च क्वचिदपि ह-श्यते इति महत्कष्टमित्यलमतिविस्तरेणाश्राऽप्रकृतेनेति विरमत् ।

" न चात्रार्तीव यत्नेन्य नोपदष्टिपर मन "

इति विज्ञापयति
श्रीमत्रीय पञ्चनदीय
सुदर्शनाचार्यशास्त्री
काशी.

इति विषयानुक्रमणिका समाप्ता

॥ श्रीः ॥

"मर्त्यैरसर्वविद्भिर्विहिते क्व नाम
ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि"

॥ श्रीः ॥

॥ श्री. ॥

अथ

# सावलोकम्

# दशरूपकम्

प्रथमः प्रकाश

। भगवते श्रीहयग्रीवाय नमः ।

इह सदाचारं प्रमाणयद्भिरविघ्नेन प्रकरणस्य समाप्त्यर्थमिष्टयोः प्रकृताभिमतदेवतयोर्नमस्कारः क्रियते श्लोकद्वयेन—

नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते ।
मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥ १ ॥

यस्य कण्ठः पुष्करायते=मृदङ्गवदाचरति, मदाभोगेन घनध्वानः=निबिडध्वनिः, नीलकण्ठस्य–शिवस्य ताण्डवे–उद्धते नृत्ते, तस्मै गणे-

---

अथ

॥ सावलोकदशरूपकप्रभा ॥

॥ भगवते श्रीहयग्रीवाय नमः ॥

आद्यं विद्यानिदानं विधिविबुधवरैर्वन्द्यमानाङ्घ्रिपद्मं
धाम्ना धामेन्दवानां दनुजभुजगजां जन्मना छद्म जिह्मम् ।
प्रज्ञालोकार्र्मतिप्रतिकृतिममतिध्वान्तदन्त्येणनाकं
वक्रं भक्ताश्रचक्रे हरिमिह तुरगग्रीवमुग्रं प्रपद्ये ॥

नत्वा श्रीमद्धयग्रीवं व्याख्याविघ्नविनाशनम् ।
स्मृत्वा श्रीमत्पदाम्भोजं श्रीगङ्गाधरशास्त्रिणाम् ॥

सावलोकदशरूपकटीकां संतनोमि शिशुबोधविधात्रीम् ।
सा प्रभेतिनिजनाम्नि समर्था स्याद्गुरोश्चरणपद्मकृपातः ॥

इह=ग्रन्थारम्भे, सदाचारम्=शिष्टाचारम्, प्रमाणयद्भिः=प्रमाणं मन्यमानैर्ग्रन्थकृद्भिरित्यर्थः, प्रकरणस्य=ग्रन्थस्य ।

पुष्करेति–" पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले " इत्यमरः । प्रकृते वाद्यभाण्डमुखेन मृदङ्गमुखं भाव्यम्, पुष्करवदाचारार्थे क्यङ्, मदः=दानं करि-

शाय नमः। अत्र खण्डश्लेषाक्षिप्यमाणोपमाच्छायालङ्कारः—नीलकण्ठस्य=मयूरस्य ताण्डवे यथा मेघध्वनिः पुष्करायन इति प्रतीतिः।

> दशरूपानुकारेण यस्य माद्यन्ति भावकाः।
> नमः सर्वविदे तस्मै विष्णवे भरताय च ॥ २ ॥

एकत्र मत्स्यकूर्मादिप्रतिमानामुद्देशेन, अन्यत्रानुकृतिरूपनाटकादिना यस्य भावकाः=ध्यातारो रसिकाश्च माद्यन्ति=हृष्यन्ति तस्मै विष्णवेऽभिमताय प्रकृताय भरताय च नमः।

श्रोतुः प्रवृत्तिनिमित्तं प्रदर्श्यते—

> कस्यचिदेव कदाचिद्दयया विषयं सरस्वती विदुषः।
> घटयति कमपि तमन्यो व्रजति जनो येन वैदग्धीम् ॥ ३ ॥

तं यंचिद्विषयं प्रकरणादिरूपं कदाचिदेव कस्यचिदेव कवेः सरस्वती योजयति येन प्रकरणादिना विषयेणान्यो जनो विदग्धो भवति।

स्वप्रवृत्तिविषयं दर्शयति—

> उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चि-
> श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः।
> शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमीष्टे
> नाट्यानां किं तु किंचित्प्रगुणरचनया लक्षणं संक्षिपामि ॥ ४ ॥

यं नाट्यवेदं वेदेभ्यः सारमादाय ब्रह्मा कृतवान्, यत्संबद्धमभिनयं

---

गम्भीरध्वनि यावत्, आभोगः=परिपूर्णता, निविडध्वनिः=गम्भीरशब्दः घण्टः। सन्देहो—"महाभोगघनध्वान" इतिविशेषणस्य "घनध्वानः" एतावन्मात्रार्थकत्वे मयूरस्येऽन्वयात् ..., अत्र श्लेषे ... [illegible] ..., ... यावत्। ... [illegible] ... ॥ १ ॥

एकत्र=विष्णुपक्षे दश... [illegible] ...र्थः। अन्यत्र=भरतपक्षे। ... इति विष्णुपक्षे, रसिका इति भरतपक्षे ॥ २ ॥

प्रवृत्तिनिमित्तं—... [illegible] ... ॥ ३ ॥

भरतश्चकार करणाङ्गहारानकरोत्, हरस्ताण्डवमुद्धतं लास्यं सुकुमारं नृत्तं पार्वती कृतवती तस्य सामस्त्येन लक्षणं कर्तुं कः शक्तः, तदेकदेशस्य तु दशरूपस्य संक्षेपः क्रियत इत्यर्थः।

विषयैक्यप्रसक्तं पौनरुक्त्यं परिहरति—

व्याकीर्णे मन्दबुद्धीनां जायते मतिविभ्रमः।
तस्यार्थस्तत्पदैस्तेन संक्षिप्य क्रियतेऽञ्जसा ॥ ५ ॥

व्याकीर्णे=विक्षिप्ते विस्तीर्णे च रसशास्त्रे मन्दबुद्धीनां पुंसां मतिमोहो भवति, तेन तस्य नाट्यवेदस्यार्थस्तत्पदैरेव संक्षिप्य ऋजुवृत्त्या क्रियत इति।

इदं प्रकरणं दशरूपज्ञानफलम्। दशरूपं किंफलमित्याह—

आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय ॥ ६ ॥

ननु केचित्—

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥"

इत्यादिना त्रिवर्गादिव्युत्पत्तिं काव्यफलत्वेनेच्छन्ति तन्निरासेन स्वसंवेद्यः परमानन्दरूपो रसास्वादो दशरूपाणां फलं न पुनरितिहासादिवत् त्रिवर्गादिव्युत्पत्तिमात्रमिति दर्शितम्। नम इति सोल्लुण्ठम्।

"नाट्यानां लक्षणं संक्षिपामि" इत्युक्तम्, किं पुनस्तन्नाट्यमित्याह—

अवस्थानुकृतिर्नाट्यम्,

काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकारश्चतुर्विधाभिनयेन तादात्म्याप-

---

करणेति—"हस्तपादसमायोगो नृत्यस्य करणं भवेत्" "अङ्गहारोऽङ्गविक्षेपः" इत्यादि सर्वं भरतसूत्रे द्रष्टव्यम् ॥ ४ ॥

विषयैक्येति—"यदेव ब्रह्मणोक्तं तस्यैव वक्ष्यमाणत्वात् पौनरुक्त्यं यदापतितं तत् परिहरतीत्यर्थः"। व्याकीर्णे=मिश्रिते विभज्यानुक्ते इति यावत्। तत्पदैः=भरतसूत्रोक्तपदैरेव। "अञ्जसा" इत्यस्यार्थः "ऋजुवृत्त्या" इति ॥ ५ ॥

इदं प्रकरणम्—अयं ग्रन्थः। दशरूपम्=नाटकादिकम्। साधु=नीरस इति यावत्। सोल्लुण्ठम्=सपरिहासम्, उक्तमिति शेषः ॥ ६ ॥

अवस्थानुकारपदार्थमाह—तादात्म्यापत्तिरिति। तादात्म्यापत्तिः=रामादिरूपताप्रदर्शनमिति यावत्। चतुर्विधेति—तदुक्तम्—"आङ्गिको वाचिकश्चैवमाहार्यः

त्तिर्नाट्यम् ।

रूपं दृश्यतयोच्यते ।

तदेव नाट्यं दृश्यमानतया रूपमित्युच्यते नीलादिरूपवत् ।

रूपकं तत्समारोपाद्,

नटे रामाद्यवस्थारोपेण वर्तमानत्वाद्रूपकं मुखचन्द्रादिवद् इत्येकस्मिन्नर्थे प्रवर्तमानस्य शब्दत्रयस्य 'इन्द्रः पुरन्दरः शक्रः' इतिवत्प्रवृत्तिनिमित्तभेदो दर्शितः ।

दशधैव रसाश्रयम् ॥ ७ ॥

रसानाश्रित्य वर्तमानं दशप्रकारकम्, एवेत्यवधारणं शुद्धाभिप्रायेण—नाटिकायाः संकीर्णत्वेन वक्ष्यमाणत्वात् ।

तानेव दशभेदानुद्दिशति—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ ८ ॥

ननु—

"डोम्बी श्रीगदितं भाणो भाणीप्रस्थानरासकाः ।
काव्यं च सप्त नृत्यस्य भेदाः स्युस्तेऽपि भाणवत् ॥"

इति रूपकान्तराणामपि भावादवधारणानुपपत्तिरित्याशङ्क्याह—

अन्यद्भावाश्रयं नृत्यम्,

सात्त्विकस्तथा" इति । भुजविक्षेपादिकृत आङ्गिकः, वेशरचनादिनिष्पाद्य आहार्यः स्वेदस्तम्भादिरूपः सात्त्विकोऽभिनयः । उक्तं च—

"स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥" इति ।

समारोपादिति— नटे रामादिरूपस्य समारोपात् तत्=रूपमेव रूपकमित्युच्यते इत्यर्थः । वर्तमानत्वात्=प्रवृत्तत्वात् । मुखेति—मुखे चन्द्राद्यारोपेणालङ्कारविशेषस्य यथा रूपकमिति नामधेयं तथेत्यर्थः । एकस्मिन्नर्थे=नाट्यलक्षणेऽर्थे । शब्दत्रयस्य=नाट्यरूपरूपकेति शब्दत्रयस्य । दर्शितः—अवस्थेत्यादिलक्षणत्रयेण दर्शितः ।

रसाश्रयमिति— रसाः आश्रयो यस्य तद् रसाश्रयं नाट्यम् । रसश्च शृङ्गारादिभेदेनाष्टविधो वक्ष्यते । वर्तमानम्=प्रवर्तमानम् ॥ ७ ॥

भावात्=सत्त्वात् । अवधारणानुपपत्तिः=दशधैवेत्यवधारणानुपपत्तिः ॥ ८ ॥

भाव आश्रयो यस्य तद् भावाश्रयं नृत्यम्, भावपदेन च वाक्यार्थीभूतस्य

रसाश्रयान्नाट्याद्भावाश्रयं नृत्यमन्यदेव तत्र भावाश्रयमिति विषयभेदान्नृत्यमिति नृतेर्गात्रविक्षेपार्थत्वेनाङ्गिकबाहुल्यात्तत्कारिषु च नर्तकव्यपदेशाल्लोकेऽपि च 'अत्र प्रेक्षणीयकम्' इति व्यवहारान्नाटकादेरन्यन्नृत्यं तद्भेदत्वाच्छ्रीगदितादेरवधारणोपपत्तिः। नाटकादि च रसविषयम्, रसस्य च पदार्थीभूतविभावादिकसंसर्गात्मकवाक्यार्थहेतुकत्वाद्वाक्यार्थाभिनयात्मकत्वं रसाश्रयमित्यनेन दर्शितम्। नाट्यमिति च 'नट अवस्पन्दने' इति नटेः किंचिच्चलनार्थत्वात्सात्त्विकबाहुल्यम्, अत एव तत्कारिषु नटव्यपदेशः। यथा च गात्रविक्षेपार्थत्वे समानेऽप्यनुकारात्मकत्वेन नृत्तादन्यन्नृत्यं तथा वाक्यार्थाभिनयात्मकान्नाट्यात्पदार्थाभिनयात्मकमन्यदेव नृत्यमिति।

प्रसङ्गान्नृत्तं व्युत्पादयति—

**नृत्तं ताललयाश्रयम्।**

तालश्चच्चत्पुटादिः, लयो द्रुतादिः, तन्मात्रापेक्षोऽङ्गविक्षेपोऽभिनय-

रसस्य पदार्थीभूता सात्त्विकादयो ग्राह्याः। उक्तं च—

"विभावेनोद्भूतो योर्थऽस्त्वनुभावैश्च गम्यते
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥"

"हस्तपादसमायोगो नृत्यस्य करणं भवेत्" इत्यादि।

नृत्यनाट्ययोः परस्परं भेदं व्युत्पादयितुं प्रथमं नृत्यस्य विषयं व्युत्पत्तिं च प्रदर्शयति—तत्रेति, तत्र=नृत्यनाट्ययोर्मध्ये। नृतेः=नृतधातोः। आङ्गिकबाहुल्यात्=आङ्गिकाभिनयबहुलत्वात्। तत्कारिषु=नृत्यकारिषु। अत्र=नृत्ये प्रेक्षणीयकम्=दर्शनीयमेव सर्वं भवति, न तु श्रवणीयम्—नृत्ये काव्यसंबन्धाभावादित्यर्थः। श्रीगदितादेस्तद्भेदत्वात्=नृत्यभेदत्वात् नाट्यस्य दशधैवेत्यवधारणोपपत्तिः। नाट्यस्य विषयं व्युत्पत्तिं चाह—नाटकादीति, वाक्यार्थस्य पदार्थानां यः परस्परं संसर्गस्तद्रूपत्वस्वीकाराद् रसस्य वाक्यार्थहेतुकस्य पदार्थीभूतविभावादिसंसर्गात्मकवाक्यार्थाभिनयात्मकत्वम् "दशधैव रसाश्रयम्" इत्यनेन प्रदर्शितमित्यन्वयः। नृत्यस्य च पदार्थीभूतभावाभिनयात्मकत्वमिति नृत्यनाट्ययोर्विषयभेदः। नटेः=नटधातोः। तत्कारिषु=सात्त्विककारिषु नाट्यकारिषु वा। यथेति—नृत्तनृत्ययोर्गात्रविक्षेपसाम्येऽपि नृत्तेऽनुकरणं न भवति नृत्ये च भवतीति नृत्तनृत्ययोर्यथा परस्परं भेदस्तथेत्यन्वयः।

नृत्यापेक्षया नृत्तस्य भेदावधारणार्थं नृत्तलक्षणमाह—नृत्तमिति। द्रुतादिरि-

शून्यो नृत्तमिति ।

अनन्तरोक्तं द्वितयं व्याचष्टे—

**आद्यं पदार्थाभिनयो मार्गो देशी तथा परम् ॥ ९ ॥**

नृत्यं पदार्थाभिनयात्मकं मार्ग इति प्रसिद्धम्, नृत्तं च देशीति । द्विविधस्यापि द्वैविध्यं दर्शयति—

**मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ।**
**लास्यताण्डवरूपेण नाटकाद्युपकारकम् ॥ १० ॥**

सुकुमारं द्वयमपि लास्यम् उद्धतं द्वितयमपि ताण्डवमिति । प्रसङ्गोक्तस्योपयोगं दर्शयति—तच नाटकाद्युपकारकमिति, नृत्यस्य क्वचिदवान्तरपदार्थाभिनयेन नृत्तस्य च शोभाहेतुत्वेन नाटकादावुपयोग इति ।

अनुकारात्मकत्वेन रूपाणामभेदात्किंकृतो भेद इत्याशङ्क्याह—

**वस्तु नेता रसस्तेषां भेदकः,**

वस्तुभेदान्नायकभेदाद्रसभेदाद्रूपाणामन्योन्यं भेद इति ।

वस्तुभेदमाह—

**वस्तु च द्विधा ।**

कथमित्याह—

**तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः ॥ ११ ॥**

प्रधानभूतमाधिकारिकं यथा रामायणे रामसीतावृत्तान्तः, तदङ्गभूतं प्रासङ्गिकं यथा तत्रैव विभीषणसुग्रीवादिवृत्तान्त इति ।

---

लयादिपदेन मध्यविलम्बितौ लयौ ग्राह्यौ । तन्मानापेक्ष=ताललयमानापेक्ष. । पदार्थभूतभावाद्यभिनयात्मकत्वाद् नृत्यमभिनयशून्यं न भवतीत्यर्थः ।

देवैर्मार्गितत्वाद् नृत्यस्य मार्ग इति प्रसिद्धिः, तत्तद्देशसंबद्धत्वाद् नृत्तस्य देशीति प्रसिद्धिः । आद्यं नृत्यम्, परं नृत्तम् ॥ ९ ॥

द्विविधस्य—नृत्यनृत्तयोरित्यर्थः । तद्द्वयम्—नृत्यं नृत्तं च । सुकुमारमिति मधुरपदव्याख्या । द्वयम्—नृत्यं नृत्तं च । द्वितयम्—नृत्यं नृत्तं च । उच्यते इति शेषः । तत्=द्विविधमपि नृत्यं नृत्तं च । नृत्यनृत्ताभ्यां नाट्योपकारप्रकारमाह—नृत्यस्येति ॥ १० ॥

अनुकारः=अनुकरणम् । वस्तु=इतिवृत्तं कथेति यावत् ॥ ११ ॥

निरुक्त्याऽऽधिकारिकं लक्षयति—

**अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः ।**
**तन्निर्वर्त्यमभिव्याप्ति वृत्तं स्यादाधिकारिकम् ॥ १२ ॥**

फलेन स्वस्वामिसंबन्धोऽधिकारः फलस्वामी चाधिकारी तेनाधिकारेणाधिकारिणा वा निर्वृत्तम्=फलपर्यन्तता नीयमानमितिवृत्तमाधिकारिकम् ।

प्रासङ्गिकं व्याचष्टे—

**प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः ।**

यस्येतिवृत्तस्य परप्रयोजनस्य सतस्तत्प्रसङ्गात्स्वप्रयोजनसिद्धिस्तत्प्रासङ्गिकमितिवृत्तं प्रसङ्गनिर्वृत्तेः ।

प्रासङ्गिकमपि पताकाप्रकरीभेदाद्द्विविधमित्याह—

**सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ॥ १३ ॥**

दूरं यदनुवर्तते प्रासङ्गिकं सा पताका सुग्रीवादिवृत्तान्तवत्–पताकेवासाधारणनायकचिह्नवत्तदुपकारित्वात्, यदल्पं सा प्रकरी श्रमणादिवृत्तान्तवत् ।

पताकाप्रसङ्गेन पताकास्थानकं व्युत्पादयति—

**प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् ।**
**पताकास्थानकं तुल्यसंविधानविशेषणम् ॥ १४ ॥**

प्राकरणिकस्य भाविनोऽर्थस्य सूचकं रूपं पताकावद्भवतीति पताकास्थानकं तच्च तुल्येतिवृत्ततया तुल्यविशेषणतया च द्विप्रकारम्–अन्योक्ति-

---

*निरुक्त्या=व्युत्पत्त्या । तत्प्रभुः=फलप्रभुः फलस्वामी । निर्वृत्तम्=सपादितम् । इतिवृत्तम्=कथा ॥ १२ ॥*

प्रासङ्गिक वस्तु । तत्प्रसङ्गात्=प्रधानसम्बन्धात् प्रधानद्वारेतियावत्, प्रसङ्गनिर्वृत्ते.=प्रधानप्रसङ्गेन जायमानत्वात् । सुग्रीवादीतिवृत्तात् श्रीरामादिप्रधानप्रसङ्गेनैव सुग्रीवादिप्रयोजनसिद्धिर्भवतीति सुग्रीवादीतिवृत्त प्रासङ्गिकमिति भावः ।

अल्पम्=अल्पदेशे वर्तमानम् । यत् प्रासङ्गिकम् ॥ १३ ॥

प्रस्तुतेति–प्रस्तुतस्य=प्राकरणिकस्य आगन्तुकभावस्य=आगन्तुकस्वरूपस्य भाविन इति यावत् वस्तुनः=इतिवृत्तस्य यद् अन्योक्त्या सूचक भवति तत् पताकास्थानकमित्युच्यते पताकावत्सूचकत्वात्, तच्च पताकास्थानकं द्विविध भवति–तुल्यसंविधानम्=तुल्येतिवृत्ततयाऽन्योक्तिरूपेण सूचकम्, तुल्यविशेषणम्=तुल्यविशेषणतया

समासोक्तिभेदात् । यथा रत्नावल्याम्—

"यातोऽस्मि पद्मनयने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥"

यथा च तुल्यविशेषणतया—

"उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥"

एवमाधिकारिकद्विविधप्रासङ्गिकभेदात्रिविधस्यापि त्रैविध्यमाह—

**प्रख्यातोत्पाद्यमिश्रत्वभेदात्त्रेधापि तत्त्रिधा ।**
**प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम् ॥ १५ ॥**
**मिश्रं च संकरात्ताभ्यां दिव्यमर्त्यादिभेदतः ।**

इति निगदव्याख्यातम् ।

---

समासोक्तिरूपेण सूचकं चेत्यन्वयः। अन्योक्तिरूपेण तुल्येतिवृत्ततया सूचकं पताका-स्थानकमुदाहरति—यातोऽस्मीति । प्रत्यायनाम्=आश्वासनाम् । अत्र कमलिनीसूर्यवृत्तान्तेनाऽन्यनायिकानायकयोर्भाविवृत्तान्तोऽन्योक्तिरूपेण=अप्रस्तुतप्रशंसया सूचितो भवति "अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया" इति । तुल्यविशेषणतया समासोक्तिरूपेण सूचकं पताकास्थानकमुदाहरति—उद्दामेति, अत्र "उद्दामोत्कलिकाम्" इत्यादीनां विशेषणानां लतानायिकावृत्तयोस्तुल्यत्वाल्लतावृत्तान्तेन समासोक्त्या नायिकावृत्तान्तः सूचितो भवति "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य यत्" इति ॥ १४ ॥

एवमेकविधमाधिकारिकं वस्तूक्तं पताकाप्रकरीभेदाद् द्विविधं प्रासङ्गिकं वस्त्विति त्रिविधं जातं तस्य त्रिविधस्यापि त्रैविध्यमाह—प्रख्यातेति । त्रिविधस्य त्रैविध्याद् नवविधत्वं सजातम् । इतिहासादिभ्यो गृहीतं वस्तु प्रख्यातमित्युच्यते, कविकल्पितं चोत्पाद्यमित्युच्यते, ताभ्याम्=प्रख्यातोत्पाद्याभ्यां सङ्करात् नाम यत्र किञ्चित् प्रख्यातं किञ्चित् कविकल्पितं तत् मिश्रमित्युच्यते इत्यन्वयः । तस्य नवविधस्यापि वस्तुनो दिव्यमर्त्यभेदाद् द्वैविध्यमाह—दिव्येति ।

तस्येतिवृत्तस्य किं फलमित्याह—

**कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ॥ १६ ॥**

धर्मार्थकामाः फलं तच्च शुद्धमेकैकमेकानुबन्धं द्वित्र्यनुबन्धं वा ।

तत्साधनं व्युत्पादयति—

**स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।**

स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजवद्बीजं यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवो यौगन्धरायणव्यापारो विष्कम्भके न्यस्त—"यौगन्धरायणः—कः संदेहः ('द्वीपादन्यस्मात्—' इति पठति)" इत्यादिना "प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ" इत्यन्तेन ।

यथा च वेणीसंहारे द्रौपदीकेशसंयमनहेतुर्भीमक्रोधोपचितयुधिष्ठिरोत्साहो बीजमिति । तच्च महाकार्यावान्तरकार्यहेतुभेदादनेकप्रकारमिति ।

अवान्तरबीजस्य संज्ञान्तरमाह—

**अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ १७ ॥**

यथा रत्नावल्यामवान्तरप्रयोजनानङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सत्यनन्तरकार्यहेतुः—"उदयनस्येन्दोरिवोद्वीक्षते । सागरिका—(श्रुत्वा) कहं एसो सो उदयणणरिन्दो जस्स अहं तादेण दिण्णा ।[1]" इत्यादि । बिन्दुः—जले तैलबिन्दुवत्प्रसारित्वात् ।

---

कार्यम्=फलम् । तच्च फलं क्वचिच्छुद्धमेकैकं नाम धर्मार्थकामेष्वेकमेव भवतीति तदेकानुबन्धम्, द्वयोः फलत्वे फलं द्व्यनुबन्धं त्रयाणां फलत्वे फलं त्र्यनुबन्धम्—त्रिमबद्धमित्यर्थः ॥ १५ ॥ १६ ॥

तत्साधनम्=उक्तफलसाधनं व्युत्पादयति=कथयति । स्वल्पोद्दिष्टः=स्वल्पतया निक्षिप्तः प्रारम्भे स्वल्प इतियावत् । पुरस्तात्—अग्रे । तच्च=बीजम् । स्पष्टमन्यत् ।

अवान्तरेति—अवान्तरकथासमाप्तौ सत्यां प्रधानकथाया अविच्छेदकारणं बिन्दुरित्यर्थः । स चाऽवान्तरबीजमेव । जले तैलबिन्दुवत् प्रसारित्वाद् बिन्दुरित्युच्यते तदेतत् प्रकृतिनिमित्तम् ॥ १७ ॥

---

1 'कथमेष स उदयननरेन्द्रो यस्याहं तातेन दत्ता ।' इति च्छाया.

इदानीं पताकाद्यं प्रसङ्गाद्व्युत्क्रमोक्तं क्रमार्थमुपसंहरन्नाह—

बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ।
अर्थप्रकृतयः पञ्च ता एताः परिकीर्तिताः ॥ १८ ॥

अर्थप्रकृतयः=प्रयोजनसिद्धिहेतवः ।

अन्यदवस्थापञ्चकमाह—

अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥ १९ ॥

यथोद्देशं लक्षणमाह—

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ।

इदमहं संपादयामीत्यध्यवसायमात्रमारम्भ इत्युच्यते यथा रत्नावल्याम्—"प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे ।" इत्यादिना सचिवायत्तसिद्धेर्वत्सराजस्य कार्यारम्भो यौगन्धरायणमुखेन दर्शितः ।

अथ प्रयत्नः—

प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः ॥ २० ॥

तस्य फलस्याप्राप्तावुपाययोजनादिरूपश्चेष्टाविशेषः प्रयत्नः यथा रत्नावल्यामालेख्याभिलेखनादिर्वत्सराजसमागमोपायः—"तहावि णत्थि अण्णो दंसणुआओ त्ति जहातहा आलिहिअ जधासमीहिअं करिस्सम् ।"[1] इत्यादिना प्रतिपादितः ।

प्राप्त्याशामाह—

उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ।

उपायस्यापायशङ्कायाश्च भावादनिर्धारितैकान्ता फलप्राप्तिः प्राप्त्याशा । यथा रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्ताभिसरणादौ समागमोपाये सति वा-

अवस्था इति-फलार्थिभिरारब्धस्य कार्यस्यारम्भाद्याः पञ्चावस्था भवन्ति । फलागमः=फलप्राप्तिः ॥ १८ ॥ १९ ॥

सचिवायत्तसिद्धेः=अमात्याधीना फलसिद्धिर्यस्य तस्य ॥ २० ॥

भावात्=सत्त्वात् । अनिर्धारितैकान्ता=नियतनिर्धारणरहिता ।

---

१ 'तथापि नास्त्यन्यो दर्शनोपाय इति यथातथालिख्य यथासमीहितं करिष्यामि ।' इति छाया.

सवदत्तालक्षणापायशङ्कायाः—"ऐवं जदि अआलवादाली विअ आअच्छिअ अण्णदो ण णइस्सदि वासवदत्ता।"[1] इत्यादिना दर्शितत्वादनिर्धारितैकान्ता समागमप्राप्तिरुक्ता ।

नियताप्तिमाह—

> अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ॥ २१ ॥

अपायाभावादवधारितैकान्ता फलप्राप्तिर्नियताप्तिरिति । यथा रत्नावल्याम्—"विदूषक.—सागरिका दुक्करं जीविस्सदि"[2] इत्युपक्रम्य "किं ण उपायं चिन्तेसि।"[3] इत्यनन्तरम् "राजा—वयस्य! देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि।" इत्यनन्तराङ्कार्थबिन्दुनानेन देवीलक्षणापायस्य प्रसादनेन निवारणान्नियता फलप्राप्तिः सूचिता ।

फलयोगमाह—

> समग्रफलसंपत्तिः फलयोगो यथोदितः ।

यथा रत्नावल्यां रत्नावलीलाभचक्रवर्तित्वावाप्तिरिति ।

संधिलक्षणमाह—

> अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ॥ २२ ॥
> यथासंख्येन जायन्ते मुखाद्याः पञ्च संधयः ।

अर्थप्रकृतीनां पञ्चानां यथासंख्येनावस्थाभिः पञ्चभिर्योगाद् यथासंख्येनैव वक्ष्यमाणा मुखाद्याः पञ्च संधयो जायन्ते ।

संधिसामान्यलक्षणमाह—

> अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ॥ २३ ॥

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसंबन्धः संधिः।

---

अपायः=अन्तरायो विघ्न इति यावत्। अवधारितैकान्ता=नियमेन निश्चिता॥ २१॥

फलयोगः=फलप्राप्तिः। संपत्तिः=प्राप्तिः।

अर्थप्रकृतयो बीजाद्याः, अवस्था आरम्भाद्या उक्ताः ॥ २२ ॥ यथासंख्येन=यथासंख्यम्। यथा बीजारम्भाभ्यां मुखसन्धिः, एवमग्रेऽपि ।

अर्थप्रकृतीनामवस्थानां च परस्परं संयोगादेव मुखादिकं सन्धिरित्युच्यते।

अवान्तरैकप्रयोजनसंबन्ध एव सामान्यतः संधीनां लक्षणमिति ॥ २३ ॥

---

१ 'एवं यद्यकालवातालीवागत्यान्यतो न नेष्यति वासवदत्ता।' इति छाया. २ 'सागरिका दुष्करं जीविष्यति।' इति छाया. ३ 'किं नोपायं चिन्तयसि।' इति छाया.

के पुनस्ते संधयः—

**मुखप्रतिमुखे गर्भः सावमर्शोपसंहृतिः ।**

यथोद्देशं लक्षणमाह—

**मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा ॥ २४ ॥**

**अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ।**

बीजानामुत्पत्तिरनेकप्रकारप्रयोजनस्य रसस्य च हेतुर्मुखसंधिरिति व्याख्येयं तेनात्रिवर्गफले प्रहसनादौ रसोत्पत्तिहेतोरेव बीजत्वमिति ।

अस्य च बीजारम्भार्थयुक्तानि द्वादशाङ्गानि भवन्ति तान्याह—

**उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ २५ ॥**

**युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।**

**उद्भेदभेदकरणान्यन्वर्थान्यथ लक्षणम् ॥ २६ ॥**

एतेषां स्वसंज्ञाव्याख्यातानामपि सुखार्थं लक्षणं क्रियते—

**बीजन्यास उपक्षेपः,**

यथा रत्नावल्याम्—" ( नेपथ्ये )

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

इत्यादिना यौगन्धरायणो वत्सराजस्य रत्नावलीप्राप्तिहेतुभूतमनुकूलदैवं स्वव्यापारं बीजत्वेनोपक्षिप्तवानित्युपक्षेपः ।

परिकरमाह—

**तद्बाहुल्यं परिक्रिया ।**

'नानार्थरससम्भवा" इत्यनार्थपदेन धर्मार्थकामलक्षणं नानारूपं प्रयोजनमाह्यं तादृशार्थहेतुभूता रसहेतुभूता च या बीजस्य प्रथमार्थप्रवृत्तेरुत्पत्ति =फलानुकूलता सा मुखसन्धिरित्यर्थः । एतद्व्याख्यायाः फलमाह—तेनेति, प्रहसनादौ त्रैवर्गिकं फलं किमपि न भवति हास्यादिमात्रफलत्वादिति तादृशहास्यादिरसोत्पत्तिमात्रहेतोरेव बीजत्वमुपपद्यते, यदि नानार्थरसेत्युभयहेतोरेव बीजत्वं स्यात्तदा प्रहसनादौ नानार्थलक्षणफलाभावात् केवलरसोत्पत्तिहेतोर्बीजत्वं न स्यादेवेत्यर्थः ॥ २४ ॥

अस्य=मुखसन्धे । तानि=अङ्गानि ॥ २५ ॥

१ 'संश्रया' इत्यपि पाठः.

यथा तत्रैव—"अन्यथा क सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गमग्नोत्थितायाः फलकासादनम्।" इत्यादिना "सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः।" इत्यन्तेन बीजोत्पत्तेरेव बहूकरणात्परिकरः।

परिन्यासमाह—

तन्निष्पत्तिः परिन्यासः,

यथा तत्रैव—

"प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाकारी भीत एवास्मि भर्तुः॥"

इत्यनेन यौगन्धरायणः स्वव्यापारदैवयोर्निष्पत्तिमुक्तवानिति परिन्यासः।

विलोभनमाह—

गुणाख्यानं विलोभनम्॥ २७॥

यथा रत्नावल्याम्—

"अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायंतने संपतन्।
संप्रत्येष सरोरुहद्युतिमुषः पादास्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्ष्यते॥"

इति वैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः[1] समागमहेत्वनुरागबीजानुगुण्येनैव विलोभनाद्विलोभनमिति।

यथा च वेणीसंहारे—

"मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्॥"

इत्यादिना "यशोदुन्दुभिः" इत्यन्तेन द्रौपद्या विलोभनाद्विलोभनमिति।

अङ्गलक्षणानि तेषां समन्वयश्च स्पष्ट एव।

तन्निष्पत्तिरिति—तस्याः बीजनिक्षेपस्य निष्पत्तिः सिद्धिः॥ २७॥

---

१ 'गुणाख्यानात्' इत्यपि पाठः।

अथ युक्तिः—

**संप्रधारणमर्थानां युक्तिः,**

यथा रत्नावल्याम्—"मयापि चैनां देवीहस्ते सबहुमानं निक्षिपता युक्तमेवानुष्ठितम् । कथितं च मया यथा बाभ्रव्यः कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथंकथमपि समुद्रादुत्तीर्य कोशलोच्छित्तये गतस्य रुमण्वतो घटितः ।" इत्यनेन सागरिकाया अन्तःपुरस्थाया वत्सराजस्य सुखेन दर्शनादिप्रयोजनावधारणाद्बाभ्रव्यसिंहलेश्वरामात्ययोः स्वनायकसमागमहेतुप्रयोजनत्वेनावधारणाद्युक्तिरिति ।

अथ प्राप्तिः—

**प्राप्तिः सुखागमः ।**

यथा वेणीसंहारे—"चेटी—भट्टिणि ! परिकुविदो विअ कुमारो लक्खीयदि ।[1]" इत्युपक्रमे 'भीमः—

मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥

द्रौपदी—( श्रुत्वा सहर्षम् ) णाध अस्सुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भण ।[2]" इत्यनेन भीमक्रोधबीजान्वयेनैव सुखप्राप्त्या द्रौपद्याः प्राप्तिरिति ।

यथा च रत्नावल्याम्—"सागरिका—( श्रुत्वा सहर्षं परिवृत्य सस्पृहं पश्यन्ती ) कधं अअं सो राआ उदयणो जस्स अहं तादेण दिण्णा ता परप्पेसणदूसिदं मे जीविदं एदस्स दंसणेण बहुमदं संजादम् ।[3]" इति सागरिकायाः सुखागमात्प्राप्तिरिति ।

अथ समाधानम्—

**बीजागमः समाधानम्,**

"स्वनायकसमागमहेतुप्रयोजनत्वेनावधारणात्" इतिपाठश्चिन्तनीयः ।

भीमेति–भीमक्रोधरूपबीजसबन्धेनैव द्रौपद्याः सुखप्राप्त्या प्राप्तिरित्यर्थः ।

---

१ 'भर्त्रि ! परिकुपित इव कुमारो लक्ष्यते ।' इति च्छाया. २ 'नाथ ! अश्रुतपूर्वं खल्वेतद्वचनं तत्पुन: पुनर्भण ।' इति च्छाया. ३ 'कथमयं स राजोदयनो यस्याहं तातेन दत्ता तत्परप्रेषणदूषितं मे जीवितमेतस्य दर्शनेन बहुमतं संजातम् ।' इति च्छाया ।

यथा रत्नावल्याम्—"वासवदत्ता—तेणं हि उअणेहि मे उवअरणाइं। सागरिका—भट्टिणि एदं सव्वं सज्जम्। वासवदत्ता—(निरूप्यात्मगतम्) अहो पमादो परिअणस्स जस्स एव्व दंसणपहादो पअत्तेण रक्खीअदि तस्स ज्जेव कहं दिट्ठिगोअरं आअदा भोदु एव्वं दाव (प्रकाशम्) हञ्जे सागरिए कीस तुमं अज्ज पराहीणे परिअणे मअणूसवे सारिअं मोत्तूण इहागदा ता तहिं ज्जेव गच्छ।" इत्युपक्रमे "सागरिका—(स्वगतम्) 'सारिआ दाव मए सुसंगदाए हत्थे समप्पिदा पेक्खिदुं च मे कुतूहलं ता अलक्खिआ पेक्खिस्सम्।'" इत्यनेन वासवदत्ताया रत्नावलीवत्सराजयोर्दर्शनप्रतीकारात्सारिकायाः सुसंगतार्पणेनालक्षितप्रेक्षणेन च वत्सराजसमागमहेतोर्बीजस्योपादानात्समाधानमिति।

यथा च वेणीसंहारे—"भीमः—भवतु पाञ्चालराजतनये श्रूयताम-ऽचिरेणैव कालेन

चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥"

इत्यनेन वेणीसंहारहेतोः क्रोधबीजस्य पुनरुपादानात्समाधानम्।

अथ विधानम्—

विधानं सुखदुःखकृत्॥ २८॥

यथा मालतीमाधवे प्रथमेऽङ्के—"माधवः—

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः॥

---

समाधानं नाम युक्त्या व्यवस्थापनं तदेव बीजागम इत्युच्यते 'वत्सराजसमागमहेतोर्बीजस्यौत्सुक्यरूपस्येत्यर्थः।

---

१ 'तेन खुपनय म उपकरणानि।' इति च्छाया. २ 'भर्त्रि! एतत्सर्वं सज्जम्।' इति च्छाया. ३ 'अहो प्रमादः परिजनस्य यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव कथं दृष्टिगोचरमागता भवतु एवं तावत्, चेटि सागरिके! कथं त्वमद्य पराधीने परिजने मदनोत्सवे सारिकां मुक्त्वेहागता तस्मात्तत्रैव गच्छ।' इति च्छाया. ४ 'सारिका तावन्मया सुसंगताया हस्ते समर्पिता प्रेक्षितुं च मे कुतूहलं तदलक्षिता प्रेक्षिष्ये।' इति च्छाया।

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥"

इत्यनेन मालत्यवलोकनस्यानुरागस्य समागमहेतोर्बीजानुगुण्येनैव माधवस्य सुखदुःखकारित्वाद्विधानमिति ।

यथा च वेणीसंहारे—"द्रौपदी—णाध पुणोवि तुम्मेहिं अहं आअच्छिअ समासासिदव्वा । भीमः—ननु पाञ्चालराजतनये किमद्याप्यलीकाश्वासनया ।

भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥"

इति सङ्ग्रामस्य सुखदुःखहेतुत्वाद्विधानमिति ।

अथ परिभावना—

परिभावोऽद्भुतावेशः,

यथा रत्नावल्याम्—"सागरिका—( दृष्ट्वा सविस्मयम् ) कधं पच्चक्खो ज्जेव अणङ्गो पूअं पडिच्छेदिता । अहंपि इध ट्ठिद ज्जेव णं पूजइस्सम् ।"
इत्यनेन वत्सराजस्यानङ्गरूपतयापह्नवादनङ्गस्य च प्रत्यक्षस्य पूजाग्रहणस्य लोकोत्तरत्वादद्भुतरसावेशः परिभावना ।

यथा च वेणीसंहारे—"द्रौपदी—किं दाणिं एसो पलअजलधरत्थणिदमंसलो खणे खणे समरदुन्दुभी ताडीयदि ।" इति लोकोत्तरसमरदुन्दुभिध्वनेर्विस्मयरसावेशाद्द्रौपद्याः परिभावना ।

अथोद्भेदः—

उद्भेदो गूढभेदनम् ।

यथा रत्नावल्यां वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैनालिकवचसा

मालतीति–समागमहेतुत्वं मालत्यवलोकनस्यानुरागस्य च विशेषं तयोरेव च सुखदुःखकारित्वमपि ॥ २८ ॥

---

१ 'नाथ पुनरपि त्वयाहमागत्य समाश्वासयितव्या ।' इति च्छाया. २ 'कथं प्रत्यक्ष एवानङ्गः पूजां प्रतिच्छेदिता । अहमपीहस्थितैवैनं पूजयिष्यामि ।' इति च्छाया. ३ 'किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ।' इति च्छाया ।

"अस्तापास्त" इत्यादिना "उदयनस्य" इत्यन्तेन बीजानुगुण्येनैवोद्भेदनादुद्भेदः ।

यथा च वेणीसंहारे—"आर्य किमिदानीमध्यवस्यति गुरुः ।" इत्युपक्रमे "( नेपथ्ये )

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥

भीम—( सहर्षम् ) जृम्भतां जृम्भतां संप्रत्यप्रतिहतमार्यस्य क्रोधज्योतिः ।" इत्यनेन छन्नस्य द्रौपदीकेशसंयमनहेतोर्युधिष्ठिरक्रोधस्योद्भेदनादुद्भेदः ।

अथ करणम्—

**करणं प्रकृतारम्भः,**

यथा रत्नावल्याम्—"णमो दे कुसुमाउह ता अमोहदंसणो मे भविस्ससि त्ति । दिट्ठं जं पेक्खिदव्वं ता जाव ण कोवि मं पेक्खइ ता गमिस्सम् ।" इत्यनेनानन्तराङ्कप्रकृतानिर्विघ्नदर्शनारम्भणात्करणम् ।

यथा च वेणीसंहारे—" तत्पाञ्चालि गच्छामो वयमिदानीं कुरुकुलक्षयाय इति, । सहदेवः—आर्य ! गच्छाम इदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम् । " इत्यनेनानन्तराङ्कप्रस्तूयमानसङ्ग्रामारम्भणात्करणमिति । सर्वत्र चेहोद्देशप्रतिनिर्देशवैषम्यं क्रियाक्रमस्याविवक्षितत्वादिति ।

---

सर्वत्रेति—इह=उदाहृतवाक्येषु, उद्देशस्य=प्रथमकथनस्य, प्रतिनिर्देशस्य=पश्चात्कथनस्य च वैषम्यं व्युत्क्रमोस्ति यथा "विक्रमानुरूपमाचरितुम्" इति प्रथमं वक्तव्यमासीत् तत् पश्चादुक्तम्, "गच्छाम" इति पश्चाद्वक्तव्यमासीत् तत् प्रथममुक्तमित्येवोद्देशप्रतिनिर्देशयोर्वैषम्यम्, एतादृशवैषम्ये हेतुमाह—क्रियाक्रमस्येति, क्रियाक्रमस्य विवक्षितत्वे तु "विक्रमानुरूपमाचरितुं गच्छाम." इत्येवमेव वक्तव्यम्—गमनक्रियाया एव प्रधानत्वाद् विक्रमानुरूपाचरणस्य विशेषणीभूतत्वात् सर्वप्रधानस्यैवान्ते वक्तव्यत्वादित्यर्थः ।

---

१ 'नमस्ते कुसुमायुध तदमोघदर्शनो मे भविष्यसीति । दृष्टं यत्प्रेक्षितव्यं तद्यावन्न कोऽपि मां प्रेक्षते तद्गमिष्यामि ।' इति च्छाया ।

अथ भेदः—

भेदः प्रोत्साहना मता ॥ २९ ॥

यथा वेणीसंहारे—"णाथ ! मा क्खु जण्णसेणीपरिभवुद्दीविदकोवा अणपेक्खिदसरीरा परिक्कमिस्सध जदो अप्पमत्तसंचरणीयाइं सुणीयन्ति रिउबलाइं । भीम.—अयि सुक्षत्रिये !

अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥ "

इत्यनेन विषण्णाया द्रौपद्याः क्रोधोत्साहबीजानुगुण्येनैव प्रोत्साहनाद्भेद इति ।

एतानि च द्वादशमुखाङ्गानि बीजारम्भद्योतकानि साक्षात्पारम्पर्येण वा विधेयानि । एतेषामुपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानामवश्यंभावितेति ।

अथ साङ्गं प्रतिमुखसंधिमाह—

लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत् ।
बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥ ३० ॥

तस्य बीजस्य किंचिल्लक्ष्य. किंचिदलक्ष्य इवोद्भेद.=प्रकाशनं तत्प्रतिमुखम् । यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया

बीजारम्भेति—बीजारम्भयोर्द्योतकानि, साक्षाद्द्योतकत्वेन वा तदसम्भवे परम्परया द्योतकत्वेन वा विधेयानि—संपाद्यानीत्यर्थः । एतेषाम्=उक्तद्वादशाङ्गानां मध्ये ॥ २९ ॥

द्वितीयं प्रतिमुखमभिधमाह—लक्ष्यालक्ष्यतयेति ।

"तत्प्रतिमुखम्" इत्यत्रत्यं तत्पदं यत्पदसापेक्षमिति यत्रेतिपदमध्याहृत्य समन्वयः कर्तव्यः—उक्तप्रकाशनं यत्र तत् प्रतिमुखमिति ।

१ 'नाथ ! मा खलु याज्ञसेनीपरिभवोद्दीपितकोपा अनपेक्षितशरीराः परिक्रमिष्यथ यतोऽप्रमत्तसंचरणीयानि श्रूयन्ते रिपुबलानि ।' इति छाया ।

२ " लक्ष्यालक्ष्य इवोद्भेदः " इति पाठान्तरम्

किंचिल्लक्ष्यस्य वासवदत्तया च चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्य दृश्यादृश्यरूपतयोद्भेदः प्रतिमुखसंधिरिति।

वेणीसंहारेऽपि द्वितीयेऽङ्के भीष्मादिवधेन किंचिल्लक्ष्यस्य कर्णादिवधाच्चाऽलक्ष्यस्य क्रोधबीजस्योद्भेदः।

"सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुत सुयोधनम्॥"

इत्यादिभि

"दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे।
तेजस्विना समरमूर्धनि पाण्डवाना
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा॥"

इत्येवमादिभिश्चोद्भेदः प्रतिमुखसंधिरिति।

अस्य च पूर्वाङ्कोपक्षिप्तबिन्दुरूपबीजप्रयत्नार्थानुगतानि त्रयोदशाङ्गानि भवन्ति, तान्याह—

**विलासः परिसर्पश्च विधूतं शमनर्मणी।**
**नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम्॥ ३१॥**
**वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि।**

यथोद्देश लक्षणमाह—

**रत्यर्थेहा विलासः स्याद्,**

यथा रत्नावल्याम्—"सागरिका—हिअअ पसीद पसीद किं इमिणा आआसमेत्तफलेण दुल्लहजणप्पत्थणाणुबन्धेण।" इत्युपक्रमे "तहावि आलेखगदं तं जणं कदुअ जधासमीहिदं करिस्सम्, तहावि तस्स

अस्य-प्रतिमुखसन्धेः। मुखसन्धौ यदेव बीजं भवति तदेव प्रतिमुखसन्धौ बिन्दुत्वं प्राप्नोति प्रसारित्वादित्याशयेनोक्तम्-बिन्दुरूपबीजेति। प्रयत्नश्चाऽवस्था, तादृशार्थानुगतानि=सबद्धानीत्यर्थः॥ ३०॥

रत्यर्थेहा=सुरतार्थेच्छा विलासः।

---

१ 'प्रगयणम्' इत्यपि पाठः २ 'रत्युपेहा' इत्यपि पाठः ३ 'हृदय, प्रसीद प्रसीद किमनेनायासमात्रफलेन दुर्लभजनप्रार्थनानुबन्धेन।' इति छाया। ४ 'तथाप्यालेखगतं तं जनं कृत्वा यथासमीहितं करिष्यामि। तथापि तस्य नास्त्यन्यो दर्शनोपाय इति।' इति छाया।

णत्थि अण्णो दंसणोवाउत्ति । ” इत्येतैर्वत्सराजसमागमरतिं चित्रादिजन्यामप्युद्दिश्य सागरिकायाश्चेष्टाप्रयत्नोऽनुरागबीजानुगतो विलास इति।

अथ परिसर्पः—

दृष्टनष्टानुसर्पणम् ॥ ३२ ॥

परिसर्पः,

यथा वेणीसंहारे—“ कञ्चुकी—योऽयमुद्यतेषु बलवत्सु, अथवा किं बलवत्सु वासुदेवसहायेष्वरिष्वद्याप्यन्तःपुरसुखमनुभवति, इदमपरमयथातथं स्वामिनः—

आशस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥”

इत्यनेन भीष्मादिवधे दृष्टस्याभिमन्युवधान्नष्टस्य बलवतां पाण्डवानां वासुदेवसहायानां सङ्ग्रामलक्षणबिन्दुबीजप्रयत्नान्वयेन कञ्चुकिमुखेन बीजानुसर्पणं परिसर्प इति ।

यथा च रत्नावल्यां सारिकावचनचित्रदर्शनाभ्यां सागरिकानुरागबीजस्य दृष्टनष्टस्य “ कासौ कासौ ” इत्यादिना वत्सराजेनानुसरणात्परिसर्प इति ।

अथ विधूतम्—

विधूतं स्यादरतिः,

यथा रत्नावल्याम्—“सागरिका—सहि[1] अहिअं मे संतावो बाधेदि । (सुसङ्गता दीर्घिकातो नलिनीदलानि मृणालिकाश्चानीयास्या अङ्गे ददाति) सागरिका—( तानि क्षिपन्ती ) सहि[2] ! अवणेहि एदाइं किं अआरणे अत्ताणं आयासेसि णं भणामि—

दृष्टस्य नष्टस्य च बीजस्य यदनुसर्पणम्=अनुसरणमन्वेषणमिति यावत् तत् परिसर्पः ॥ ३२ ॥

---

१ ‘ सखि ! अधिकं मे संतापो बाधते ।’ इति च्छाया. २ ‘सखि ! अपनयैतानि किमकारणं आत्मानमायासयसि । ननु भणामि—

दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।
पिअसहि विसमं पेम्मं मरणं सरणं णवर एक्कम् ॥ ”

इत्यनेन सागरिकाया बीजान्वयेन शीतोपचारविधूननाद्विधूतम् । यथा च वेणीसंहारे भानुमत्या दुःस्वप्नदर्शनेन दुर्योधनस्यानिष्टशङ्कया पाण्डवविजयशङ्कया वा रतेर्विधूननमिति ।

अथ शमः—

तच्छमः शमः ।

तस्या अरतेरुपशमः शमो यथा रत्नावल्याम्—"राजा—वयस्य ! अनया लिखितोऽहमिति यत्सत्यमात्मन्यपि मे बहुमानस्तत्कथं न पश्यामि । ” इति प्रक्रमे " सागरिका—(आत्मगतम् ।) हिअअ ! समस्सस मणोरहोवि दे एत्तिअं भूमिं ण गदो ।” इति किंचिदरत्युपशमाच्छम इति।

अथ नर्म—

परिहासवचो नर्म,

यथा रत्नावल्याम्—" सुसङ्गता—सहि ! जस्स कए तुमं आअदा सो अअं पुरदो चिट्ठदि । सागरिका-(साश्रम्) सुसङ्गदे ! कस्स कए अहं आअदा । सुसङ्गता—अइ अप्पसंकिदे ! णं चित्तफलअस्स ता गेण्ह एदम् ।" इत्यनेन बीजान्वितं परिहासवचनं नर्म ।

यथा च वेणीसंहारे—" ( दुर्योधनश्चेटीहस्तादर्घपात्रमादाय देव्याः समर्पयति पुनः ) भानुमति—( अर्घं दत्त्वा ) हला ! उवणेहि मे कुसुमाई जाव अवराणं पि देवाणं सवरिअं णिवत्तेमि । ( हस्तौ प्रसारयति दुर्योधनः पुष्पाण्युपनयति भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति ) " इत्यनेन नर्मणा दुःस्वप्नदर्शनोपशमार्थं देवतापूजाविघ्नकारिणा बीजोद्घाटनात्परिहासस्य प्रतिमुखाङ्गत्वं युक्तमिति ।

ननु नर्मणः कथं सन्ध्यङ्गत्वं स्यादित्याशङ्क्याह—नर्मणेति, दुःस्वप्नदर्शनस्यो-

---

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकम्' ॥ इति च्छाया ।

१ ' हृदय ! समाश्वसिहि मनोरथोऽपि त एतावतीं भूमिं न गतः । ' इति च्छाया. २ ' सखि ! यस्य कृते त्वमागता सोऽयं पुरतस्तिष्ठति ' इति च्छाया. ३ 'सुसङ्गते ! कस्य कृतेऽहमागता ।' इति च्छाया. ४ अयि आत्मशङ्किते ! ननु चित्रफलकस्य । तद्गृहाणैतत् ।' इति च्छाया. ५ ' हला उपनय मे कुसुमानि यावदपरेषामपि देवानां सपर्यां निवर्तयामि ।' इति च्छाया ।

अथ नर्मद्युतिः—

धृतिस्तज्जा द्युतिर्मता ॥ ३३ ॥

यथा रत्नावल्याम्—" सुसङ्गता—सेहि अदिणिट्ठुरा दाणिं सि तुमम् जा एवं पि भट्टिणा हत्थावलम्बिदा कोवं ण मुञ्चसि । सागरिका—( सभ्रूभङ्गमीषद्विहस्य ) सुसङ्गदे ! दाणिं पि ण विरमसि । " इत्यनेनानुरागबीजोद्घाटनान्वयेन धृतिर्नर्मजा द्युतिरिति दर्शितमिति ॥

अथ प्रगमनम्—

उत्तरा वाक्प्रगमनम्,

यथा रत्नावल्याम्—" विदूषकः—भो वअस्स ! दिट्ठिआ वड्ढसे । राजा—( सकौतुकम् ) वयस्य ! किमेतत् । विदूषकः—भो ! एदं क्खु तं जं मए भणिदं तुमं एव्व आलिहिदो को अण्णो कुसुमाउहव्ववदेसेण णिण्हवीअदि । " इत्यादिना

" परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार ।

न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥ "

इत्यनेन राजविदूषकसागरिकासुसङ्गतानामन्योन्यवचनेनोत्तरोत्तरानुरागबीजोद्घाटनात्प्रगमनमिति ।

अथ निरोधः—

हितरोधो निरोधनम् ।

यथा रत्नावल्याम्—" राजा—धिङ्मूर्ख !

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।

रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवता ॥ "

प्रशमार्थं या देवतापूजा तद्विप्रकारिणापि नर्मणा बीजस्योद्घाटनात् तादृशनर्मणः परिहासरूपस्य सन्ध्यङ्गत्वं युक्तमेवेत्यन्वयः । चिन्त्यमिदं वाक्यम् ।

तज्जा—नर्मजन्या धृतिरेव द्युतिः—नर्मद्युतिः ॥ ३३ ॥

उत्तरेति—बीजानुगतमुत्तरोत्तरवचनं प्रगमनं प्रगयणं वेत्यर्थः ।

---

१ सखि ! अतिनिष्ठुरेदानीमसि त्वं येवमपि भर्त्रा हस्तावलम्बिता कोपं न मुञ्चसि ।' इति च्छाया. २ ' सुसङ्गते ! इदानीमपि न विरमसि ।' इति च्छाया. ३ ' प्रगयणम् ' इत्यपि पाठः । ४ ' भो वयस्य ! दिष्ट्या वर्धसे ।' इति च्छाया. ५ ' भोः ! एतत्खलु तद्यन्मया भणितं त्वमेवालिखितः ! कोऽन्यः कुसुमायुधव्यपदेशेन निह्नूयते । ' इति च्छाया ।

इत्यनेन वत्सराजस्य सागरिकासमागमरूपहितस्य वासवदत्ताप्रवेशसूचकेन विदूषकवचसा निरोधान्निरोधनमिति ।

अथ पर्युपासनम्—

पर्युपास्तिरनुनयः,

यथा रत्नावल्याम्—" राजा—

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ "

इत्यनेन चित्रगतयोर्नायकयोर्दर्शनात्कुपिताया वासवदत्ताया अनुनयनं नायकयोरनुरागोद्घाटान्वयेन पर्युपासनमिति ।

अथ पुष्पम्—

पुष्पं वाक्यं विशेषवत् ॥ ३४ ॥

यथा रत्नावल्याम्—" ( राजा सागरिका हस्ते गृहीत्वा स्पर्शं नाटयति ) विदूषकः—भो ! एसा अपुव्वा सिरी तए समासादिदा । राजा—वयस्य ! सत्यम्

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम् ॥ "

इत्यनेन नायकयोः साक्षादन्योन्यदर्शनादिना सविशेषानुरागोद्घाटनात्पुष्पम् ।

अथोपन्यासः—

उपन्यासस्तु सोपायम्,

---

उद्घाटः=प्राकट्यम् । अन्वयः=सम्बन्धः । अत्र 'उद्घाटनेन' इतियुक्तं प्रतिभाति । विशेषवत्=प्रशंसावत् प्रशंसाप्रतिपादकमितियावत् ।

श्रीरेषेतिवाक्येन सागरिकायाः श्रीत्वेन वर्णनादिदं वाक्यं विशेषवदिति पुष्पाङ्घटितम् ॥ ३४ ॥

"उपन्यासस्तु सोपायम्" इत्यत्र पूर्वोक्तम् "वाक्यम्" इतिपदमनुवर्तितव्यं

---

१ 'भो ! एषापूर्वा श्रीस्त्वया समासादिता ।' इति छाया. २ 'प्रसादनमुपन्यासः' इति पाठान्तरम् ।

यथा रत्नावल्याम्—" सुसङ्गता—भट्टा ! अलं सङ्काए मए वि भट्टिणी पसाएण कीलिदं एव्व ता किं कण्णाभरणेण अदो वि मे गरुओ पसाओ जं कीस तए अहं एत्थ आलिहिअ त्ति कुविआ मे पिअसही साअरिआ ता पसादीअदु । " इत्यनेन सुसङ्गतावचसा सागरिका मया लिखिता सागरिकया च रुष्टमिति सूचयता प्रसादोपन्यासेन बीजोद्भेदादुपन्यास इति ।

अथ वज्रम्—

## वज्रं प्रत्यक्षनिष्ठुरम् ।

यथा रत्नावल्याम्—" वासवदत्ता—( फलकं निर्दिश्य ) अज्जउत्त ! एसावि जा तुह समीवे एदं किं वसन्तअस्स विण्णाणम् । " पुनः " अज्जउत्त ! ममावि एदं चित्तकम्म पेक्खन्तीए सीसवेअणा समुप्पण्णा ।" इत्यनेन वासवदत्तया वत्सराजस्य सागरिकानुरागोद्भेदात्प्रत्यक्षनिष्ठुराभिधानं वज्रमिति ।

अथ वर्णसंहारः—

चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥ ३८ ॥

यथा वीरचरिते तृतीयेऽङ्के—

" परिषदियमृषीणामेष वृद्धो युधाजित्  
सह नृपतिरमात्यैर्लोमपादश्च वृद्धः ।  
अयमविरतयज्ञो ब्रह्मवादी पुराणः  
प्रभुरपि जनकानामद्रुहो याचकास्ते ॥ "

तथा च सोपायम्=हेतुप्रदर्शकम् ( सहेतुकम् ) वाक्यमुपन्यास इत्यर्थो यथात्रोदाहरणे प्रसादनहेतुत्वेन सागरिकाप्रतिकृतिलेखनेन सागरिकाकोपो निर्दिष्ट इति ।

"वज्रं प्रत्यक्षनिष्ठुरम्" इत्यत्रापि "वाक्यम्" इत्यनुवर्तनीयं तथा च प्रत्यक्षनिष्ठुरं वाक्यं वज्रमित्यर्थः ।

चातुर्वर्ण्येति—चतुर्णां वर्णानामुपगमनं समागम एकत्रीभाव इति यावत् ।

---

१ 'भर्तः ! अलं शङ्कया ममापि भर्तुः प्रसादेन क्रीडितमेव तत्किं कर्णाभरणेन अतोपि मे गुरुः प्रसादो यत्कथं त्वयाहमत्रालिखितेति कुपिता मे प्रियसखी सागरिका तत्प्रसाद्यताम् ।' इति च्छाया । २ ' आर्यपुत्र ! एषापि या तव समीपे एतत्किं वसन्तकस्य विज्ञानम् ।' इति च्छाया. ३ आर्यपुत्र ! ममाप्येतच्चित्रकर्म पश्यन्त्याः शीर्षवेदना समुत्पन्ना ।' इति च्छाया ।

इत्यनेन ऋषिक्षत्रियामात्यादीनां संगताना वर्णानां वचसा रामविजयाशंसिनः परशुरामदुर्णयस्यात्रेहयाच्चाद्वारेणोद्भेदनाद्वर्णसंहार इति ।

एतानि च त्रयोदश प्रतिमुखाङ्गानि मुखसंध्युपक्षिप्तबिन्दुलक्षणावान्तरबीजमहाबीजप्रयत्नानुगतानि विधेयानि । एतेषां च मध्ये परिसर्पप्रशमवज्रोपन्यासपुष्पाणां प्राधान्यम्, इतरेषां यथासंभवं प्रयोग इति ।

अथ गर्भसंधिमाह—

गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
द्वादशाङ्गः पताका स्यान्न वा स्यात्प्राप्तिसंभवः ॥ ३६ ॥

प्रतिमुखसंधौ लक्ष्यालक्ष्यरूपतया स्तोकोद्भिन्नस्य बीजस्य सविशेषोद्भेदपूर्वकः सान्तरायो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनश्च तस्यैवान्वेषणं वारंवारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसंधिरिति । तत्र चौत्सर्गिकत्वेन प्राप्तायाः पताकाया अनियमं दर्शयति—'पताका स्यान्न वा' इत्यनेन । प्राप्तिसंभवस्तु स्यादेवेति दर्शयति—'स्यात्' इति । यथा रत्नावल्यां तृतीयेऽङ्के वत्सराजस्य वासवदत्तालक्षणापायेन तद्वेषपरिग्रहसागरिकाभिसरणोपायेन च विदूषकवचसा सागरिकाप्राप्त्याशा प्रथमं पुनर्वासवदत्तया विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनरपायनिवारणोपायान्वेषणम् "नास्ति देवीप्रसादनं मुक्त्वान्य उपायः" इत्यनेन दर्शितमिति ।

स च द्वादशाङ्गो भवति । तान्युद्दिशति—

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चानुमानं च तोटकाधिबले तथा ॥ ३७ ॥
उद्वेगसंभ्रमाक्षेपाः, लक्षणं च प्रणीयते— ।

---

अद्रोहस्य क्रोधशान्तेर्याच्ना=याचनम् ॥ ३५ ॥

गर्भसन्धि व्युत्पादयति—गर्भ इति । गर्भः=गर्भसन्धिः । उक्तानामर्थप्रकृतीनामवस्थानां च यथाक्रमं संयोगेन सन्धयो जायन्ते इत्युक्तत्वाद् अर्थप्रकृतेः पताकाया अवस्थारूपप्राप्त्याशायाश्च संयोगेन गर्भसन्धिना भवितव्यमथापि गर्भसन्धौ पताकायाः सत्त्वनियमो नास्तीत्याह—"पताका स्यान्न वा" इति । प्राप्तिसंभवः=प्राप्त्याशा तया त्ववश्य भवितव्यमित्यर्थः ॥ ३६ ॥

सः=गर्भसन्धिः । तानि=द्वादशाङ्गानि ॥ ३७ ॥

यथोद्देशं लक्षणमाह—

अभूताहरणं छद्म,

यथा रत्नावल्याम्—" साधु रे अमच्च वसन्तअ साधु अदिसइदो तए अमच्चो जोगन्धराअणो इमाए संधिविग्गहचिन्ताए ।" इत्यादिना प्रवेशनेन गृहीतवासवदत्तावेषायाः सागरिकाया वत्सराजाभिसरणं छद्म विदूषकसुसङ्गताकृतकाञ्चनमालानुवादद्वारेण दर्शितमित्यभूताहरणम्।

अथ मार्गः—

मार्गस्तत्त्वार्थकीर्तनम् ॥ ३८ ॥

यथा रत्नावल्याम्—" विदूषकः—दिट्ठिआ वड्ढसि समीहिदब्भहिआए कज्जसिद्धीए । राजा—वयस्य कुशलं प्रियायाः । विदूषकः—अइरेण सअं जेव्व पेक्खिअ जाणिहिसि । राजा—दर्शनमपि भविष्यति । विदूषकः—( सगर्वम् ) कीस ण भविस्सदि जस्स दे उवहसिदविहप्फदिबुद्धिविहवो अहं अमच्चो । राजा—तथापि कथमिति श्रोतुमिच्छामि । विदूषकः—( कर्णे कथयति ) एव्वम् ।" इत्यनेन यथा विदूषकेण सागरिकासमागमः सूचितः तथैव निश्चितरूपो राज्ञे निवेदित इति तत्त्वार्थकथनान्मार्ग इति ।

अथ रूपम्—

रूपं वितर्कवद्वाक्यम्,

यथा रत्नावल्याम्—" राजा—अहो किमपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवं जनं प्रति पक्षपातस्तथाहि—

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।

छद्मेति—यच्छद्मना सम्पादितं भवति तच्छद्मेत्युच्यते तस्याश्चाऽभूताहरणमिति संज्ञा ॥ ३८ ॥

१ 'साधु रे अमात्य वसन्तक साधु अतिशयितस्त्वयामात्यो यौगन्धरायणोऽनया संधिविग्रहचिन्तया ।' इति छाया. २ 'दिष्ट्या वर्धते समीहिताभ्यधिकया कार्यसिद्ध्या ।' इति छाया. ३ अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि ।' इति छाया. ४ 'कथं न भविष्यति यस्य ते उपहसितबृहस्पतिबुद्धिविभवोऽहममात्यः ।' इति छाया. ५ 'एवम्' इति छाया ।

वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥

कथं चिरयति वसन्तकः किं नु खलु विदितः स्यादयं वृत्तान्तो देव्याः।" इत्यनेन रत्नावलीसमागमप्राप्त्याशानुगुण्येनैव देवीशङ्कायाश्च वितर्कोद्रूपमिति ॥

अथोदाहरणम्—

सोत्कर्षं स्यादुदाहृतिः ।

यथा रत्नावल्याम्—"विदूषकः—( सहर्षम् ) ही ही भोः, कोसम्बीरज्जलाहेणावि ण तादिसो वअस्सस्स परितोसो असि यादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि त्ति तक्केमि ।" इत्यनेन रत्नावलीप्राप्तिवार्तापि कौशाम्बीराज्यलाभादतिरिच्यत इत्युत्कर्षाभिधानादुदाहृतिरिति ।

अथ क्रमः—

क्रमः संचिन्त्यमानाप्तिः,

यथा रत्नावल्याम्—" राजा—उपनतप्रियासमागमोत्सवस्यापि मे किमिदमत्यर्थमुत्ताम्यति चेतः, अथवा—

तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्ने ।
तपति प्रावृषि सुतरामभ्यर्णजलागमो दिवसः ॥

विदूषकः—( आकर्ण्य ) भोदि सागरिए ! एसो पिअवअस्सो तुमं ज्जेव उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि । ता निवेदेमि से तुहागमणम् ।" इत्यनेन वत्सराजस्य सागरिकासमागममभिलषत एव भ्रान्तसागरिकाप्राप्तिरिति क्रमः ।

---

"सोत्कर्षं स्यादुदाहृतिः" इत्यत्र "वाक्यम्" इतिपदमनुवर्तितव्यं तथा च सोत्कर्षं वाक्यमुदाहृतिः=उदाहरणमित्यर्थः ।

क्रम इति—संचिन्त्यमानस्यार्थस्याप्तिः=प्राप्तिः क्रम इत्युच्यते । भ्रान्त इति—तत्र वासवदत्तैव सागरिकात्वेन गृहीतेति भ्रान्तस्योदयनस्य भ्रान्त्या वा सागरिकाप्तिः ।

---

१ 'ही ही भोः कौशाम्बीराज्यलाभेनापि न तादृशो वयस्यस्य परितोष आसीत्, यादृशो मम सकाशात्प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि ।' इति छाया. २ 'भवति सागरिके ! एष प्रियवयस्यस्त्वामेवोद्दिश्योत्कण्ठानिर्भरं मन्त्रयति तन्निवेदयामि तस्मै तवागमनम् ' इति छाया ।

अथ क्रमान्तरं मतभेदेन—

भावज्ञानमथापरे ॥ ३९ ॥

यथा रत्नावल्याम्—"राजा—( उपसृत्य ) प्रिये सागरिके !

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥"

इत्यादिना" इह तदप्यस्त्येव बिम्बाधरे " इत्यन्तेन वासवदत्तया वत्सराजभावस्य ज्ञातत्वात्क्रमान्तरमिति ।

अथ संग्रहः—

संग्रहः सामदानोक्तिः,

यथा रत्नावल्याम्—" साधु वयस्य ! साधु इदं ते पारितोषिकं कटकं ददामि । " इत्याभ्यां सामदानाभ्यां विदूषकस्य सागरिकासमागमकारिणः संग्रहात्संग्रह इति ।

अथानुमानम्—

अभ्यूहो लिङ्गतोऽनुमा ।

यथा रत्नावल्याम्—" राजा—धिङ् मूर्ख ! त्वत्कृत एवायमापतितोऽस्माकमनर्थः । कुतः—

समारूढा प्रीतिः प्रणयबहुमानात्प्रतिदिनं
व्यलीके वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥

विदूषकः—भो वअस्स ! वासवदत्ता किं करइस्सदि त्ति ण जाणामि सागरिआ उण दुक्करं जीविस्सदि त्ति तक्केमि ।[१]" इत्यत्र प्रकृष्टप्रेमस्खलनेन सागरिकानुरागजन्येन वासवदत्ताया मरणाभ्यूहनमनुमानमिति ॥

मतान्तरेण क्रमसाह–भावज्ञानेति, "क्रमान्तरम्" इत्यत्र 'क्रमः' इत्येव पाठो युक्तः ॥ ३९ ॥

अभ्यूहः=तर्कः । अनुमा=अनुमानम् । लिङ्गत =हेतुना । अत्र राजकृतो वासवदत्तामरणाभ्यूहः, विदूषककृतश्च सागरिकामरणाभ्यूह इति विवेकः ।

१ ' भो वयस्य ! वासवदत्ता किं करिष्यतीति न जानामि सागरिका पुनर्दुष्करं जीविष्यतीति तर्कयामि ।' इति छाया ।

अथाधिबलम्—

**अधिबलमभिसंधिः,**

यथा रत्नावल्याम्—"काञ्चनमाला—भट्टिणि ! इअं सा चित्तसालिआ । ता वसन्तअस्स सण्णं करेमि ( छोटिकां ददाति )" इत्यादिना वासवदत्ताकाञ्चनमालाभ्यां सागरिकासुसङ्गतावेषाभ्यां राजविदूषकयोरभिसंधीयमानत्वादधिबलमिति ।

अथ तोटकम्—

**संरब्धं तोटकं वचः ॥ ४० ॥**

यथा रत्नावल्याम्—"वासवदत्ता—( उपसृत्य ) अज्जउत्त ! जुत्तमिणं सरिसमिणम् । ( पुन सरोषम् ) अज्जउत्त उट्ठेहि किं अज्जवि आहिजाहिए सेवादुक्खमणुभवीअदि, काञ्चनमाले ! एदेण ज्जेव पासेन बन्धिअ आणेहि एणं दुट्ठबह्मणम् एदं पि दुट्ठकण्णअं अग्गदो करेहि ।" इत्यनेन वासवदत्तासंरब्धवचसा सागरिकासमागमान्तरायभूतेनाऽनियतप्राप्तिकारणं तोटकमुक्तम् ।

यथा च वेणीसंहारे—

" प्रयत्नपरिबोधित. स्तुतिभिरद्य शेषे निशाम् "

इत्यादिना

"धृतायुधो यावदहं तावदन्यैः किमायुधैः ।"

इत्यन्तेनान्योन्यं कर्णाश्वत्थाम्नोः संरब्धवचसा सेनाभेदकारिणा पाण्डवविजयप्राप्त्याशान्वितं तोटकमिति ।

ग्रन्थान्तरे तु—

**तोटकस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः ।**

अभिसन्धि =छग्मः । अभिसंधीयमानत्वात्=छग्यमानत्वात्, सागरिकाविषयकाभिप्रायग्राहित्वाद्वा ।

सरब्धम्=क्रोधयुक्तम् ।

अनियतप्राप्तिकारणम्–नियतप्राप्त्यभावप्रयोजकम् ॥ ४० ॥

ग्रन्थान्तरोक्तमधिबलस्य तोटकस्य च लक्षणमाह–तोटकस्येति, अन्यथाभावो

---

१ 'भर्त्रि ! इयं सा चित्रशालिका तद्वसन्तकस्य संज्ञां करोमि ।' इति च्छाया.

२ 'आर्यपुत्र ! युक्तमिदं सदृशमिदम् । आर्यपुत्र उत्तिष्ठ किमद्याप्याभिजात्या सेवादुःखमनुभूयते, काञ्चनमाले ! एतेनैव पाशेन बद्ध्वानयैनं दुष्टब्राह्मणम् एतामपि दुष्टकन्यकामग्रत. कुरु ।' इति च्छाया ।

यथा रत्नावल्याम्—"राजा—देवि एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि—

आताम्रतामपनयामि विलक्ष एव
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां तु मुखेन्दुबिम्बे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥"

संरब्धवचनं यत्तु तोटकं तदुदाहृतम् ॥ ४१ ॥

यथा रत्नावल्याम्—"राजा—प्रिये वासवदत्ते ! प्रसीद प्रसीद । वासवदत्ता—( अश्रूणि धारयन्ती ) अज्जउत्त ! मा एवं भण अण्णसङ्क्रन्ताइं खु एदाइं अक्खराइं त्ति ।"

यथा च वेणीसंहारे—"राजा—अये सुन्दरक ! कच्चित्कुशलमङ्गराजस्य । पुरुषः—कुसलं सरीरमेत्तकेण । राजा—किं तस्य किरीटिना हता धौरेयाः, क्षत्तः सारथिः, भग्नो वा रथः । पुरुषः—देव ! ण भग्गो रहो भग्गो से मणोरहो । राजा—( ससम्भ्रमम् ) कथम् ।" इत्येवमादिना संरब्धवचसा तोटकमिति ।

अथोद्वेगः—

उद्वेगोऽरिकृता भीतिः,

यथा रत्नावल्याम्—"सागरिका—( आत्मगतम् ) कहं अकिदपुण्णेहिं अत्तणो इच्छाए मरिदुं पि ण पारीअदि ।" इत्यनेन वासवदत्तातः सागरिकाया भयमित्युद्वेगः । यो हि यस्यापकारी स तस्यारिः ।

यथा च वेणीसंहारे—"सूतः—( श्रुत्वा सभयम् ) कथमासन्न एवासौ कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिरनुपलब्धसंज्ञश्च महाराज',

वैरस्यं तथा च संरब्धवचनस्य तोटकत्वे विनयवचनस्याधिवलत्वं वक्तव्यमित्यर्थः अत्र संरब्धवचनम्=उद्विग्नवचनम् ॥ ४१ ॥

ननु सागरिकाया वासवदत्ता कथमरिः स्यादित्याशङ्क्याह—यो हीति । वासवदत्ता च सागरिकाया अपकारिणी—वत्सराजसमागमविघ्नकारिणीत्वात् ।

---

१ आर्यपुत्र मैव भण । अन्यसङ्क्रान्तानि खल्वेतान्यक्षराणीति ।' इति च्छाया। २ 'कुशलं शरीरमात्रेण ।' इति च्छाया. ३ 'देव न भग्नो रथः । भग्नोऽस्य मनोरथः ।' इति च्छाया. ४ 'कथमकृतपुण्यैरात्मन इच्छया मर्तुमपि न पार्यते ।' इति च्छाया ।

भवतु दूरमपहरामि स्यन्दनम् । कदाचिदयमनार्यो दुःशासन इवास्मिन्नप्यनार्यमाचरिष्यति ।" इत्यरिकृता भीतिरुद्वेगः ।

अथ संभ्रमः—

**शङ्कात्रासौ च संभ्रमः ।**

यथा रत्नावल्याम्—"विदूषकः—( पश्यन् ) को उण एसा । (ससंभ्रमम् ) कधं देवी वासवदत्ता अत्ताणं वावादेदि । राजा—(ससंभ्रममुपसर्पन्) कासौ कासौ ।" इत्यनेन वासवदत्ताबुद्धिगृहीतायाः सागरिकाया मरणशङ्कया संभ्रम इति ।

यथा च वेणीसंहारे—" (नेपथ्ये कलकलः) अश्वत्थामा—(ससंभ्रमम्) मातुल ! मातुल ! कष्टम् । एष भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं शरवर्षैर्दुर्योधनराधेयावभिद्रवति । सर्वथा पीतं शोणितं दुःशासनस्य भीमेन ।" इति शङ्का । तथा " ( प्रविश्य संभ्रान्तः सप्रहारः ) सूतः—त्रायतां त्रायतां कुमारः । " इति त्रासः । इत्येताभ्यां त्रासशङ्काभ्यां दुःशासनद्रोणवधसूचकाभ्यां पाण्डवविजयप्राप्त्याशान्वितः संभ्रम इति ।

अथाक्षेपः—

**गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः ॥ ४२ ॥**

यथा रत्नावल्याम्—" राजा—वयस्य देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि । " पुनः क्रमान्तरे "सर्वथा देवीप्रसादनं प्रति निष्प्रत्याशीभूताः स्मः ।" पुनः "तत्किमिह स्थितेन देवीमेव गत्वा प्रसादयामि ।" इत्यनेन देवीप्रसादायत्ता सागरिकासमागमसिद्धिरिति गर्भबीजोद्भेदादाक्षेपः ।

यथा च वेणीसंहारे—"सुन्दरकः—अहवा किमेत्थ देव्वं उआलहामि तस्स क्खु एदं णिब्भच्छिदविदुरवअणवीअस्स परिभूदपिदामहहिदोवदेसङ्कुरस्स सउणिप्पोच्छाहणारूढमूलस्स कूडविससाहिणो पञ्चा-

शङ्केति–क्वचिच्छङ्कायाः क्वचित् त्रासस्य क्वचिच्च द्वयोरेव संभ्रमत्वं विज्ञेयम् । त्रासः=भयम् ॥ ४२ ॥

१ 'का पुनरेषा ! कथं देवी वासवदत्तात्मानं व्यापादयति । इति च्छाया ।

२ 'अथवा किमत्र दैवमुपालभामि तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनारूढमूलस्य कूटविषशाखिनो पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति ।' इति च्छाया ।

लीकेसरगहणकुसुमस्स फलं परिणमेदि ।" इत्यनेन बीजमेव फलोन्मुखतयाक्षिप्यत इत्याक्षेपः ।

एतानि द्वादश गर्भाङ्गानि प्राप्त्याशाप्रदर्शकत्वेनोपनिबन्धनीयानि । एषां च मध्येऽभूताहरणमार्गतोटकाधिबलाक्षेपाणां प्राधान्यम् इतरेषां यथासंभवं प्रयोग इति साङ्गो गर्भसंधिरुक्तः ।

अथावमर्शः—

क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ॥ ४३ ॥

अवमर्शनमवमर्शः पर्यालोचनं तच्च क्रोधेन वा व्यसनाद्वा विलोभनेन वा 'भवितव्यमनेनार्थेन' इत्यवधारितैकान्तफलप्राप्त्यवसायात्मा गर्भसंध्युद्भिन्नबीजार्थसंबन्धो विमर्शोऽवमर्शः, यथा रत्नावल्यां चतुर्थेऽङ्केऽग्निविद्रवपर्यन्तो वासवदत्ताप्रसत्त्या निरपायरत्नावलीप्राप्त्यवसायात्मा विमर्शो दर्शितः । यथा च वेणीसंहारे दुर्योधनरुधिराक्तभीमसेनागमपर्यन्तः—

" तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्येऽपि याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥"

इत्यत्र "स्वल्पावशेषे जये" इत्यादिभिर्विजयप्रत्यर्थिसमस्तभीष्मादिमहारथवधादवधारितैकान्तविजयावमर्शनादवमर्शनं दर्शितमित्यवमर्शसंधिः ।

तस्याङ्गसंग्रहमाह—

तत्रापवादसंफेटौ विद्रवद्रवशक्तयः ।
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥ ४४ ॥

---

अवमर्शसन्धिं व्युत्पादयति–क्रोधेनेति ।

फलप्राप्त्यवसायः=फलप्राप्तिविषयकाध्यवसाय आत्मा स्वरूपम् यस्य सः । अध्यवसायो निश्चयः । गर्भसन्ध्युद्भिन्नस्य बीजलक्षणार्थस्य संबन्धो यत्र सः । विजयप्रत्यर्थी=शत्रुः ॥ ४३ ॥

तत्र=अवमर्शसन्धौ । त्रयोदशाङ्गानीत्यर्थः ॥ ४४ ॥

---

१ "सोऽवमर्शोऽङ्गसंग्रहः" इति पाठान्तरम् ।

**मरोचना विचलनमादानं च त्रयोदश ।**

यथोदेशं लक्षणमाह—

**दोपमख्यापवादः स्यात्,**

यथा रत्नावल्याम्—"सुसङ्गता—सा खु तवस्सिणी भट्टिणीए उज्जइणीं णीअदित्ति पवादं करिअ उवत्थिदे अद्धरत्ते ण आणीअदि कहिंपि णीदेत्ति । विदूषकः—( सोद्वेगम् ) अदिणिग्घिणं क्खु कदं देवीए ।" पुनः—"भो[3] वअस्स ! मा खु अण्णधा संभावेहि सा खु देवीए उज्जइणी पेसिदा अदो अप्पिअं त्ति कहिदम् । राजा—अहो निरनुरोधा मयि देवी ।" इत्यनेन वासवदत्तादोपप्रख्यापनादपवादः ।

यथा च वेणीसंहारे—"युधिष्ठिरः—पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी ? पाञ्चालकः—न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।" इति दुर्योधनस्य दोषप्रख्यापनादपवाद इति ।

अथ संफेटः—

**संफेटो रोपभाषणम् ।**

यथा वेणीसंहारे—"भोः कौरवराज ! कृतं बन्धुनाशदर्शनमन्युना, मैवं विषादं कृथाः—पर्याप्ताः पाण्डवाः समरायाऽहमऽसहाय इति ।

पञ्चाना मन्यसेऽस्माकं यं सुयोधं सुयोधन ।
दंशितस्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥

इत्थं श्रुत्वाऽसूयात्मिका निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्तराष्ट्रः—

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः ॥

इत्युत्थाय च परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ—"

निरनुरोधा=प्रतिकूला । प्रतिकूलत्वमेव वामदत्तादोषः ।

इत्थमिति=इत्थं श्रुत्वा कुमारयोरसूयात्मिकां दृष्टिं निक्षिप्य धार्तराष्ट्र उक्तवानित्यन्वयः ।

१ "सा खलु तपस्विनी भट्टिन्योज्जयिनीं नीयत इति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्रापि नीतेति ।" इति च्छाया. "अतिनिर्घृणं खलु कृतं देव्या ।" इति च्छाया. ३ भो वयस्य ! मा खल्वन्यथा संभावय सा खलु देव्योज्जयिन्या प्रेषिता अतोऽप्रियमिति कथितम्" इति च्छाया ।

इत्यनेन भीमदुर्योधनयोरन्योन्यरोपसंभाषणाद्विजयबीजान्वयेन संफेट इति ।

अथ विद्रवः—

**विद्रवो वधबन्धादिः,**

यथा छलितरामे—

"येनावृत्य मुखानि साम पठतामत्यन्तमायासितं
बाल्ये येन हृताक्षसूत्रवलयप्रत्यर्पणैः क्रीडितम् ।
युष्माकं हृदयं स एष विशिखैरापूरितांसस्थलो
मूर्च्छाघोरतमःप्रवेशविवशो बद्ध्वा लवो नीयते ॥"

यथा च रत्नावल्याम्—

"हर्म्याणां हेमशृङ्गश्रियमिव शिखरैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥"

इत्यादि, पुनः । "वासवदत्ता—अज्जउत्त ! ण क्खु अहं अत्तणो कारणादो भणामि एसा मए णिग्घिणहिअआए संजदा साअरिआ विवज्जदि ।"[1]
इत्यनेन सागरिकावधनन्धाग्निभिर्विद्रव इति ।

अथ द्रवः—

**द्रवो गुरुतिरस्कृतिः ॥ ४५ ॥**

यथोत्तरचरिते—

"वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥"

इत्यनेन लवो रामस्य गुरोस्तिरस्कारं कृतवानिति द्रवः ।

यथा च वेणीसंहारे—"युधिष्ठिरः—भगवन् कृष्णाग्रज सुभद्राभ्रातः!

"द्रवो गुरुतिरस्कृतिः" इत्यत्र तिरस्कार उपालम्भादिरूपोऽपि विशेयो यथा श्रीबलभद्रविषये ॥ ४५ ॥

---

1 "आर्यपुत्र ! न खल्वहमात्मनः कारणाद्भणामि एषा मया निर्घृणहृदयया संयता सागरिका विपद्यते ।" इति छाया ।

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विगुणो मन्दभाग्ये मयीत्थम् ॥ "

इत्यादिना बलभद्रं गुरुं युधिष्ठिरस्तिरस्कृतवानिति द्रवः ।

अथ शक्तिः—

**विरोधशमनं शक्तिः,**

यथा रत्नावल्याम्—" राजा—

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।
प्रत्यासत्तिमुपागता नहि तथा देवी रुदत्या यथा
प्रक्षाल्यैव तयैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥ "

इत्यनेन सागरिकालाभविरोधिवासवदत्ताकोपोपशमनाच्छक्तिः ।

यथा चोत्तरचरिते लवः प्राह—

"विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ "

अथ द्युतिः—

**तर्जनोद्वेजने द्युतिः ।**

यथा वेणीसंहारे—" एतच्च वचनमुपश्रुत्य रामानुजस्य सकलनिकुञ्जपूरिताशातिरिक्तमुद्भ्रान्तसलिलचरशतसंकुलं त्रासोद्वृत्तनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्—

जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितसुराक्षीवं रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ "

इत्यादिना "त्यक्त्वोत्थितः सरभसम्" इत्यनेन दुर्वचनजलावलोडनाभ्यां दुर्योधनतर्जनोद्वेजनकारिभ्यां पाण्डवविजयानुकूलदुर्योधनोत्थापनहेतुभ्यां भीमस्य द्युतिरुक्ता ।

अथ प्रसङ्गः—

**गुरुकीर्तनं प्रसङ्गः,**

यथा रत्नावल्याम्—" देव यासौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मतीं वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वप्रार्थिता सती प्रतिदत्ता । " इत्यनेन रत्नावल्या लाभानुकूलाभिजनप्रकाशिना प्रसङ्गाद्गुरुकीर्तनेन प्रसङ्गः ।

तथा मृच्छकटिकायाम्—" चाण्डालकः—ऍस सागलदत्तस्स सुओ अज्जविणअदत्तस्स णत्तू चालुदत्तो वावादिदुं वज्झट्ठाणं णीअदि ऍदेण किल गणिआ वसन्तसेणा सुवण्णलोभेण वावादिद. त्ति । [१]

चारुदत्तः—

मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ "

इत्यनेन चारुदत्तवधाभ्युदयानुकूलं प्रसङ्गाद्गुरुकीर्तनमिति प्रसङ्गः ।

अथ छलनम्—

**छलनं चावमाननम् ॥ ४६ ॥**

यथा रत्नावल्याम्—राजा—अहो निरनुरोधा मयि देवी । " इत्यनेन वासवदत्तयेष्टासंपादनाद्वत्सराजस्यावमाननाच्छलनम् । यथा च रामाभ्युदये सीतायाः तरित्यागेनाऽवमाननाच्छलनमिति ।

---

"गुरुकीर्तनं प्रसङ्गः" इत्यत्र 'प्रसङ्गो गुरुकीर्तनम्' इत्येव पाठो युक्तो वृत्तानुरुल्यार्थम् । गुरूणां मातापित्रादीनाम् ।

"अहो निरनुरोधा मयि देवि" इत्यत्र वत्सराजेन स्वविषयकं वासवदत्ताकर्तृकमवमाननमुक्तम्, "इष्टाऽसंपादनात्" इत्यस्य 'पूर्वोक्तसागरिकाया अन्यत्र प्रेषणेनाऽनिष्टसंपादनादित्यर्थ.—इष्टासंपादनमात्रेण छलनादेरसंभवात् ॥ ४६ ॥

---

[१] " एष सागरदत्तस्य सुत आर्यविनयदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति ।" इति च्छाया ।

अथ व्यवसाय—

व्यवसायः स्वशक्त्युक्तिः,

यथा रत्नावल्याम्—"ऐन्द्रजालिकः—

किं धरणीए मिअङ्को आआसे महिहरो जले जलणो।
मज्झण्हम्मि पओसो दाविज्जउ देहि आणत्तिम्॥
अहवा किं बहुणा जम्पिएण—
मज्झ पइण्णा एसा भणामि हिअएण ज महसि दट्ठुम्।
त ते दावेमि फुडं गुरुणो मन्तप्पहावेण॥"

इत्यनेनैन्द्रजालिको मिथ्याभ्रमोत्थापनेन वत्सराजस्य हृदयस्थसागरिकादर्शनानुकूलां स्वशक्तिमाविष्कृतवान्।

यथा च वेणीसंहारे—

"नून तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा।
बध्यते केशपाशस्ते स चास्याकर्षणे क्षमः॥"

इत्यनेन युधिष्ठिर स्वदण्डशक्तिमाविष्करोति।

अथ विरोधनम्—

संरब्धानां विरोधनम्।

यथा वेणीसंहारे—"राजा—रे रे मरुत्तनय किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे। अपि च—

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्ष भूपतीना मम भुवनपतेराज्ञया द्यूतदासी।

"संरब्धाना विरोधनम्" इत्यत्र "स्वशक्त्युक्ति" इत्यनुवर्तितव्य तथा च संरब्धाना बद्धवैराणा स्वशक्त्युक्तिर्विरोधनमित्यर्थ। विरोधाभावे स्वशक्त्युक्तिस्तु व्यवसाय एव।

---

१ 'किं धरण्या मृगाङ्क आकाशे महीधरो जले ज्वलन।
मध्याह्ने प्रदोषो दर्श्यता देह्याज्ञप्तिम्॥
अथवा किं बहुना जल्पितेन।
मम प्रतिज्ञैषा भणामि हृदयेन यद्वाञ्छसि द्रष्टुम्।
तत्ते दर्शयामि स्फुट गुरोर्मन्त्रप्रभावेण॥' इति च्छाया।

२ 'सरम्भोक्ति' इत्यपि पाठ।

अस्मिन्वैरानुबन्धे तव किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिसारद्रविणगुरुमदं मामजित्वैव दर्पः ॥
( भीमः क्रोधं नाटयति ) अर्जुनः—आर्य प्रसीद किमत्र क्रोधेन
अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥
भीमः—अरे भरतकुलकलङ्क !
अद्यैव किं न विसृजेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन् ।
विघ्नं गुरू न कुरुतो यदि मत्कराग्र-
निर्भिद्यमानरणितास्थिनि ते शरीरे ॥
अन्यच्च मूढ !
शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविदलने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥
राजा—दुरात्मन् भरतकुलापसद पाण्डवपशो ! नाहं भवानिव विकत्थनाप्रगल्भः । किं तु—
द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गने ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणम् ॥"
इत्यादिना संरब्धयोर्भीमदुर्योधनयोः स्वशक्त्युक्तिर्विरोधनमिति ।
अथ प्ररोचना—
सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना ॥ ४७ ॥
यथा वेणीसंहारे—"पाञ्चालकः—अहं च देवेन चक्रपाणिना"
इत्युपक्रम्य "कृतं संदेहेन—
पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते च कवरीबन्धे करोतु क्षणम् ।

संरब्धयोः=बद्धवैरयोः ।

सिद्धेति—कस्यचित् सिद्धपुरुषस्य भाविनः कार्यस्य 'सिद्धमेवेदम्' इत्यादिरूपेण सिद्धत्वेनामन्त्रणात्=कथनाद् यद् भाविकार्यस्य सिद्धत्वेन प्रदर्शनं सा प्ररोचनेत्यर्थः ॥ ४७ ॥

राभे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥"

इत्यादिना "मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः" इत्यन्तेन द्रौपदीकेशसंयमनयुधिष्ठिरराज्याभिषेकयोर्भाविनोऽपि सिद्धत्वेन दर्शिका प्ररोचनेति ।

अथ विचलनम्—

**विकत्थना विचलनम्,**

यथा वेणीसंहारे—"भीमः—तात ! अम्ब !

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥

अपि च तात !

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥"

इत्यनेन विजयबीजानुगतस्वगुणाविष्करणाद्विचलनमिति ।

यथा च रत्नावल्याम्—"यौगन्धरायणः—

देव्या मद्वचनाद्यथाभ्युपगतः पत्युर्वियोगस्तदा
सा देवस्य कलत्रसंघटनया दुःखं मया स्थापिता ।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥"

इत्यनेनान्यपरेणापि यौगन्धरायणेन 'मया जगत्स्वामित्वानुबन्धी कन्यालाभो वत्सराजस्य कृतः ।' इति स्वगुणानुकीर्तनाद्विचलनमिति ।

अथादानम्—

**आदानं कार्यसंग्रहः ।**

यथा वेणीसंहारे—"भीमः—ननु भोः समन्तपञ्चकसंचारिणः !

---

*विकत्थना—आत्मश्लाघा । विचलनम्—च्युतिः । धैर्यगाम्भीर्यसंयोगच्युत्या आत्मश्लाघासंपादनमित्यर्थः ।*

कार्यसंग्रहः—कार्योपसंहारः ।

रक्षो नाहं न भूतं रिपुरुधिरजलाप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखादग्धशेषा. कृतं
वस्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥"

इत्यनेन समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम् ।

यथा च रत्नावल्याम्—"सागरिका—( दिशोऽवलोक्य ) दिट्ठिआ समन्तादो पज्जलिदो भअवं हुअवहो अज्ज करिस्सदि दुक्खावसाणम् ।" इत्यनेनान्यपरेणापि दुःखावसानकार्यस्य संग्रहादादानम् । यथा च—" जगत्स्वामित्वलाभ. प्रभोः " इति दर्शितमेवम् । इत्येतानि त्रयोदशावमर्शाङ्गानि तत्रैतेषामपवादशक्तिव्यवसायप्ररोचनादानानि प्रधानानीति ।

अथ निर्वहणसंधि.—

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ४८ ॥
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।

यथा वेणीसंहारे—" कञ्चुकी—( उपसृत्य सहर्षम् ) महाराज ! वर्धसे वर्धसे अयं खलु कुमारभीमसेन सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्ष्यव्यक्तिः । " इत्यादिना द्रौपदीकेशसंयमनादिमुखसंध्यादिबीजाना निजनिजस्थानोपक्षिप्तानामेकार्थतया योजनम् ।

यथा च रत्नावल्यां सागरिकारत्नावलीवसुभूतिबाभ्रव्यादीनामर्थानां मुखसंध्यादिषु प्रकीर्णानां वत्सराजैककार्यार्थत्वम् "वसुभूति.—( सागरिकां निर्वर्ण्यापवार्य ) बाभ्रव्य सुसदृशीयं राजपुत्र्या ।" इत्यादिना दर्शितमिति निर्वहणसधिः ।

अथ तदङ्गानि—

संधिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ॥ ४९ ॥

सगृहीतत्वात्=उपसंहृतत्वात् ।

निर्वहणसन्धिं व्युत्पादयति—बीजवन्त इत्यादिना । बीजवन्त=बीजसंबद्धा मुखाद्यर्था=मुखसन्ध्यादिषु निक्षिप्ता अर्था यत्रैकार्थ्यम्=एकार्थसाधनत्वमुपनीयन्ते स निर्वहणसन्धिरित्यन्वय ॥ ४८ ॥

१ 'दिष्ट्या समन्तात्प्रज्वलितो भगवान्हुतवहोऽद्य करिष्यति दुःखावसानम् ।' इति च्छाया ।

प्रसादानन्दसमयाः कृतिभाषोपगूहनाः ।
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥ ५० ॥

यथोद्देशं लक्षणमाह—

संधिर्बीजोपगमनम्,

यथा रत्नावल्याम्—"वसुभूतिः—बाभ्रव्य ! सुसदृशीयं राजपुत्र्या । बाभ्रव्यः—ममाप्येवमेव प्रतिभाति ।" इत्यनेन नायिकाबीजोपगमात्संधिरिति ।

यथा च वेणीसंहारे—"भीमः—भवति यज्ञवेदिसंभवे ! स्मरति भवती यत्तन्मयोक्तम्—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥"

इत्यनेन मुखोपक्षिप्तस्य बीजस्य पुनरुपगमात्संधिरिति ।

अथ विबोधः—

विबोधः कार्यमार्गणम् ।

यथा रत्नावल्याम्—"वसुभूतिः—( निरूप्य ) देव कुत इयं कन्यका ? राजा—देवी जानाति । वासवदत्ता—अज्जउत्त ! एसा सागरादो पाविअत्ति भणिअ अमच्च जोगन्धराअणेण मम हत्थे णिहिदा अदो ज्जेव सागरिअत्ति सद्दावीअदि । राजा—( आत्मगतम् ) यौगन्धरायणेन न्यस्ता, कथमसौ ममानिवेद्य करिष्यति ।" इत्यनेन रत्नावलीलक्षणकार्यान्वेषणाद्विबोधः ।

यथा च वेणीसंहारे—"भीमः—मुञ्चतु मुञ्चतु मामार्यः क्षणमेकम् । युधिष्ठिरः—किमपरमवशिष्टम् ? भीमः—सुमहदवशिष्टम्, संयमयामि तावदनेन दुःशासनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः—गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसं-

बीजस्योपगमनम्=उद्भावनं संधिनामकमङ्गम् । उपगमात्=उद्भावनात् । मार्गणम्=अन्वेषणम् ।

१ "आर्यपुत्र ! एषा सागरात्प्राप्तेति भणित्वामात्यर्यौगन्धरायणेन मम हस्ते निहिता अत एव सागरिकेति शब्द्यते ।" इति छाया ।

हारम् ।" इत्यनेन केशसंयमनकार्यस्यान्वेषणाद्विरोध इति ।

अथ ग्रथनम्—

ग्रथनं तदुपक्षेपः,

यथा रत्नावल्याम्—"यौगन्धरायणः—देव ! क्षम्यतां यद्देवस्यानिवेद्य मयैतत्कृतम् ।" इत्यनेन वत्सराजस्य रत्नावलीप्रापणकार्योपक्षेपाद्ग्रथनम् ।

यथा च वेणीसंहारे—"भीमः—पाञ्चालि न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना । तिष्ठतु तिष्ठतु । स्वयमेवाहं संहरामि ।" इत्यनेन द्रौपदीकेशसंयमनकार्यस्योपक्षेपाद्ग्रथनम् ।

अथ निर्णयः—

ऽनुभूताख्या तु निर्णयः ॥ ५१ ॥

यथा रत्नावल्याम्—"यौगन्धरायणः—( कृताञ्जलिः ) देव श्रूयताम्–इयं सिंहलेश्वरदुहिता सिद्धादेशेनोपदिष्टा–योऽस्याः पाणिं ग्रहीष्यति स सार्वभौमो राजा भविष्यति तत्प्रत्ययादस्माभिः स्वाम्यर्थे बहुशः प्रार्थ्यमानापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता तदा लावणिके देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः ।" इत्यनेन यौगन्धरायणः स्वानुभूतमर्थं ख्यापितवानिति निर्णयः ।

यथा च वेणीसंहारे—"भीमः—देव देव अजातशत्रो क्वाद्यापि दुर्योधनहतकः मया हि तस्य दुरात्मनः—

भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीपि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥"

इत्यनेन स्वानुभूतार्थकथनान्निर्णय इति ।

अथ परिभाषणम्—

परिभाषा मिथो जल्पः,

यथा रत्नावल्याम्—" रत्नावली—( आत्मगतम् ) कैआवराहा

तत् तस्य कार्यस्योपक्षेप उपसहारः ।

अनुभूताख्येति–अनुभूतस्य विचारितस्य सम्पादितस्य वा कार्यस्याख्या कथनमुपवर्णनमित्यर्थः ॥ ५१ ॥

---

१ " कृतापराधा देव्या न शक्नोमि मुखं दर्शयितुम् ।" इति च्छाया ।

देवीए ण सक्कुणोमि मुहं दंसिदुम् । वासवदत्ता—( सास्रं पुनर्बाहू प्रसार्य) एहि अयि णिट्ठुरे[1] इदाणीं पि बन्धुसिणेहं दंसेही । ( अपवार्य ) अज्ज-उत्त ! लज्जामि क्खु अहं इमिणा णिसंसत्तणेण ता लहुं अवणेहि से बन्धणम् । राजा—यथाह देवी । ( बन्धनमपनयति ) वासवदत्ता—( वसुभूतिं निर्दिश्य ) अज्ज ! अमच्चजोगन्धरायणेण दुज्जणीकदह्मि जेण जाणन्तेण वि णाचक्खिदम् ।[2]" इत्यनेनान्योन्यवचनात्परिभाषणम् ।

यथा च वेणीसंहारे—" भीम.—कृष्टा येनासि राज्ञां सदसि नृप-शुना तेन दुःशासनेन ।" इत्यादिना "कासौ भानुमती योपहसति पाण्ड-वदारान् ।" इत्यन्तेन भाषणात्परिभाषणम् ।

अथ प्रसाद.—

प्रसादः पर्युपासनम् ।

यथा रत्नावल्याम्—" देव ! क्षम्यताम् ।" इत्यादि दर्शितम् ।

यथा च वेणीसंहारे—" भीमः—( द्रौपदीमुपसृत्य ) देवि पाञ्चाल-राजतनये ! दिष्ट्या वर्धसे रिपुकुलक्षयेन ।" इत्यनेन द्रौपद्या भीमसेने-नाराधितत्वात्प्रसाद इति ।

अथानन्दः—

आनन्दो वाञ्छितावाप्तिः,

यथा रत्नावल्याम्—" राजा—यथाह देवी ( रत्नावलीं गृह्णाति ) "

यथा च वेणीसंहारे—" द्रौपदी—णाध विसुमरिदह्मि एदं वावारं णाधस्स प्पसादेण पुणो सिक्खिस्सम् ( केशान्बध्नाति ) [3]" इत्याभ्यां प्रार्थि-तरत्नावलीप्राप्तिकेशसंयमनयोर्वत्सराजद्रौपदीभ्यां प्राप्तत्वादानन्दः ।

अथ समयः—

समयो दुःखनिर्गमः ॥ ५२ ॥

यथा रत्नावल्याम्—" वासवदत्ता—( रत्नावलीमालिङ्ग्य ) सम-[4]

पर्युपासनमनुप्रसादनम् ॥ ५२ ॥

---

१ " एहि अयि निष्ठुरे ! इदानीमपि बन्धुस्नेहं दर्शय । आर्यपुत्र ! लज्जे खल्वहमनेन नृशंसत्वेन तल्लघ्वपनयास्या बन्धनम् ।" इति च्छाया. २ " आर्य ! अमात्ययौगन्धरायणेन दुर्जनीकृतास्मि येन जानतापि नाचक्षितम् ।" इति च्छाया. ३ " नाथ ! विस्मृतास्म्येतं व्यापारं नाथस्य प्रसादेन पुनः शिक्षिष्यामि ।" इति च्छाया. ४ " समाश्वसिहि समाश्वसिहि भगिनिके ।" इति च्छाया ।

स्सस-समस्सस वहिणिए ।" इत्यनेन भगिन्योरन्योन्यसमागमेन दुःख-निर्गमात्समयः ।

यथा च वेणीसंहारे—" भगवन् कुतस्तस्य विजयादन्यद् यस्य भगवान्पुराणपुषः स्वयमेव नारायणो मङ्गलान्याशास्ते ।

कृतगुरुमहदादिक्षोभसंभूतमूर्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।
अजममरमचिन्त्यं चिन्तयित्वापि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥"

इत्यनेन युधिष्ठिरदुःखापगमं दर्शयति ।

अथ कृतिः—

कृतिर्लब्धार्थशमनम्,

यथा रत्नावल्याम्—" राजा—को देव्याः प्रसादं न बहु मन्यते । वासवदत्ता—अज्जउत्त ! दूरे से मादुउलं ता तथा करेसु जधा बन्धुअणं न सुमरेदि । " इत्यन्योन्यवचसा लब्धायां रत्नावल्यां राज्ञः सुश्लिष्टय उपशमनात्कृतिरिति ।

यथा च वेणीसंहारे—"कृष्णः—एते खलु भगवन्तो व्याससवाल्मीकि" इत्यादिना " अभिषेकमारब्धवन्तास्तिष्ठति ।" इत्यनेन ( इत्यन्तेन ) प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः ।

अथ भाषणम्—

मानाद्याप्तिश्च भाषणम् ।

---

लब्धार्थस्योपशमनमपि कृतिर्यथा प्रदर्शितरत्नावल्याम्, लब्धार्थस्य स्थिरीकरणमपि कृतिर्यथा प्रदर्शितवेणीसंहारे ।

सुश्लिष्टये=सश्लेषेण—राज्ञ.=वत्सराजस्य ( राजममवेतायाः ) रत्नावलीविषयकस्नेहवृत्तेः सपादनेन लब्धाया रत्नावल्या उपशमनात् कृति', लब्धार्थेन शमनं लब्धार्थशमनमित्यर्थे तु लब्धया रत्नावल्या राज्ञ उपशमनं तदप्युक्तवचनै रत्नावल्या स्नेहवृत्तिसंपादनेनैव तादृशस्नेहवृत्तिसंपादनस्य राजानुकूलत्वादित्यर्थः । किं वा राज्ञः रत्नावल्या सुश्लिष्टये=सयोजनाय यदुक्तवचनैरुपशमनं कृतं तस्मादुपशमनादत्र कृतिरुच्यते इत्यर्थः ।

---

१ " आर्यपुत्र दूरेऽस्या मातृकुलं तत्तथा कुरुष्व यथा बन्धुजन न स्मरति ।" इति च्छाया ।

यथा रत्नावल्याम्—"राजा—अतःपरमपि प्रियमस्ति ?
यावो विक्रमबाहुरात्मसमता प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोशलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै करोमि स्पृहाम् ॥"
इत्यनेन कामार्थमानादिलाभाद्भाषणमिति ।

अथ पूर्वभावोपगूहने—

**कार्यदृष्ट्यद्भुतप्राप्ती पूर्वभावोपगूहने ॥ ५३ ॥**

कार्यदर्शनं पूर्वभावः यथा रत्नावल्याम्—"यौगन्धरायणः—एवं विज्ञाय भगिन्याः सम्प्रति करणीये देवी प्रमाणम् । वासवदत्ता—फुड ज्जेव किं ण भणेसि पडिवाएहि से रअणमालं त्ति[1] ।" इत्यनेन 'वत्सराजाय रत्नावली दीयताम्' इति कार्यस्य यौगन्धरायणाभिप्रायानुप्रविष्टस्य वासवदत्तया दर्शनात्पूर्वभाव इति ।

अद्भुतप्राप्तिरुपगूहनं यथा वेणीसंहारे—"( नेपथ्ये ) महासमरानलदग्धशेषाय स्वस्ति भवते राजन्यलोकाय ।
क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि ।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राजन्यकेभ्यः ॥
युधिष्ठिरः—देवि ! एष ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा सिद्धजनेन ।" इत्येतेनाद्भुतार्थप्राप्तिरुपगूहनमिति । लब्धार्थशमनात्कृतिरपि भवति ।

अथ काव्यसंहारः—

**वराप्तिः काव्यसंहारः,**

यथा—"किं ते भूयः प्रियमुपकरोमि ।" इत्यनेन काव्यार्थसंहरणात्काव्यसंहार इति ।

अथ प्रशस्तिः—

**प्रशस्तिः शुभशंसनम् ।**

अद्भुताथप्राप्तिरिति—अद्भुतार्थस्य—केनाप्य...धादे प्राप्तिरित्यर्थः ॥ ५३ ॥

1 स्फुटमेव किं न भणसि प्रतिपादयास्मै रत्नमालामिति । इति च्छाया ।

यथा वेणीसंहारे—"प्रीततरश्चेद्भवान् तदिदमेवमस्तु—

अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
भवतु भगवद्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
कलितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवित्
सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥"

इति शुभशंसनात्प्रशस्तिः । इत्येतानि चतुर्दश निर्वहणाङ्गानि । एवं चतुःषष्ट्यङ्गसमन्विताः पञ्चसंधयः प्रतिपादिताः ।

षट्प्रकारं चाङ्गानां प्रयोजनमित्याह—

**उक्ताङ्गानां चतुःषष्टिः षोढा चैषां प्रयोजनम् ॥ ५४ ॥**

कानि पुनस्तानि षट्प्रयोजनानि—

**इष्टस्यार्थस्य रचना गोप्यगुप्तिः प्रकाशनम् ।**
**रागः प्रयोगस्याश्चर्यं वृत्तान्तस्यानुपक्षयः ॥ ५५ ॥**

विवक्षितार्थनिबन्धनं गोप्यार्थगोपनं प्रकाश्यार्थप्रकाशनमभिनेयरागवृद्धिश्चमत्कारित्वं च काव्यस्येतिवृत्तस्य विस्तर इत्यङ्गैः षट्प्रयोजनानि संपाद्यन्त इति ।

पुनर्वस्तुविभागमाह—

**द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।**
**सूच्यमेव भवेत्किंचिद्दृश्यश्रव्यमथापरम् ॥ ५६ ॥**

कीदृक्सूच्यं कीदृग्दृश्यश्रव्यमित्याह—

**नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।**
**दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥ ५७ ॥**

---

उक्तेति—उक्तानां सन्ध्यङ्गानां चतुःषष्टिः सङ्ख्या, एषामङ्गानां षोढा प्रयोजनम् किं वा चतुःषष्टिसङ्ख्यानामुक्ताङ्गानामेषां च षोढा प्रयोजनमित्यन्वयः॥५४

इष्टेति—इष्टस्य=विवक्षितस्यार्थस्य रचना–निबन्धनम्, प्रयोगस्य=अभिनेयस्येति विषयत्वं षष्ठ्यर्थस्तथा च नाटकादिप्रयोगविषयका द्रष्टॄणां रागवृद्धिः=प्रीतिवृद्धिरित्यर्थः । प्रयोगस्याश्चर्यम्=चमत्कारित्वम् । वृत्तान्तस्य=इतिवृत्तस्याऽनुपक्षयः=विस्तर इत्यन्वयः ॥ ५५ ॥

दृश्य इति—मधुरः=चित्ताकर्षी, उदात्तः=उदारः, रसभावनिरन्तरः=रसभावपूर्णश्च वस्तुविस्तरो दृश्यः ॥ ५७ ॥

सूच्यस्य प्रतिपादनप्रकारमाह—

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ ५८ ॥

तत्र विष्कम्भः—

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥ ५९ ॥

अतीतानां भाविनां च कथावयवानां ज्ञापको मध्यमेन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितो विष्कम्भक इति ।

स द्विविधः—शुद्धः संकीर्णश्चेत्याह—

एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः ।

एकेन द्वाभ्यां वा मध्यमपात्राभ्यां शुद्धो भवति, मध्यमाधमपात्रैर्युगपत्प्रयोजितः संकीर्ण इति ।

अथ प्रवेशकः—

तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ॥ ६० ॥
प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ।

तद्वदेवेति भूतभविष्यदर्थज्ञापकत्वमतिदिश्यते, अनुदात्तोक्त्या नीचेन नीचैर्वा पात्रैः प्रयोजित इति विष्कम्भलक्षणापवादः, अङ्कद्वयस्यान्त इति प्रथमाङ्के प्रतिषेध इति ।

अथ चूलिका—

अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना ॥ ६१ ॥

नेपथ्यपात्रेणार्थसूचनं चूलिका यथोत्तरचरिते द्वितीयाङ्कस्यादौ—

अर्थेति—अर्थस्य=इतिवृत्तस्योपक्षेपकैः=सूचकैर्विष्कम्भकादिभिः पञ्चभिः सूच्यं वस्तु प्रतिपादयेत्=सूचयेदिति ॥ ५८ ॥

संक्षेपार्थः=संक्षेपोऽर्थस्य=सूच्येतिवृत्तस्य यस्मिन् सः, संक्षेपेण वस्तुसूचक इत्यर्थः ॥ ५९ ॥

अनुदात्तोक्त्या=प्राकृतभाषया ॥ ६० ॥ अपवादः=बाधः । अन्तः=मध्ये । शेषार्थस्य=अप्रदर्शनीयस्य वृत्तस्य ।

अन्त इति—जवनिकान्तः स्थितैः पात्रैर्योऽर्थस्य सूचना सा चूलिका ॥ ६१ ॥

"( नेपथ्ये ) स्वागतं तपोधनायाः ( ततः प्रविशति तपोधना )" इति नेपथ्यपात्रेण वासन्तिकयाऽऽत्रेयीसूचनाच्चूलिका ।

यथा वा वीरचरिते चतुर्थाङ्कस्यादौ—"( नेपथ्ये ) भो भो वैमानिकाः ! प्रवर्त्यन्तां प्रवर्त्यन्तां मङ्गलानि—

कृशाश्वान्तेवासी जयति भगवान्कौशिकमुनिः
सहस्रांशोर्वंशे जगति विजयि क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधरः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥'

इत्यत्र नेपथ्यपात्रैर्देवैः 'रामेण परशुरामो जितः' इति सूचनाच्चूलिका ।

अथाङ्कास्यम्—

अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।

अङ्कान्त एव पात्रमङ्कान्तपात्रं तेन विश्लिष्टस्योत्तराङ्कमुखस्य सूचनं तद्द्वारेणोत्तराङ्कावतारोऽङ्कास्यमिति यथा वीरचरिते द्वितीयाङ्कान्ते—"(प्रविश्य) सुमन्त्रः—भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । इतरे—क्व भगवन्तौ । सुमन्त्रः—महाराजदशरथस्यान्तिके । इतरे—तदनुरोधात्तत्रैव गच्छामः" इत्यङ्कसमाप्तौ "(ततः प्रविशन्त्युपविष्टा वसिष्ठविश्वामित्रपरशुरामाः ) इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथार्धविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति ।

अथाङ्कावतारः—

अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः ॥ ६२ ॥
एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ।

यत्र प्रविष्टपात्रेण सूचितमेव पूर्वाङ्काविच्छिन्नार्थतयैवाङ्कान्तरमापतति प्रवेशकविष्कम्भकादिशून्यं सोऽङ्कावतारः यथा मालविकाग्निमित्रे प्रथमा-

---

छिन्नस्य=विश्लिष्टस्याङ्कस्य योऽर्थस्तत्सूचनात्, तद्द्वारेण=अङ्कास्यस्थेनोत्तराङ्कमुखादौ प्रवेशोऽङ्कस्याऽऽस्यमिवेत्यङ्कास्यमित्युच्यते इत्यर्थः ।

अङ्कावतारं लक्षयति—अङ्कावतार इति, स्पष्टं सरलम् । विष्कम्भकप्रवेशकचूलिकाङ्कास्यानामभाव एव वस्तुतोऽङ्कावतार इत्यपि वक्तुं शक्यते, तथापि नाटकस्यारम्भसूचनं पूर्वाङ्कान्तागतेन केनचित् पात्रेण कर्तव्यमिति विशेषः, अयं चोदाहरणं मालविकाग्निमित्रे द्रष्टव्यम् । आपतति=आरभ्यते ।

ङ्कान्ते—विदूषकः— तेणे हि दुवेवि देवीए पेक्खागेहं गदुअ सङ्गीदोवअरणं करिअ तत्थभवदो दूदं विसज्जेथ अथवा मुदङ्गसद्दो ज्जेव णं उत्थावयिस्सदि ।" इत्युपक्रमे मृदङ्गशब्दश्रवणादनन्तरं सर्वाण्येव पात्राणि प्रथमाङ्कप्रक्रान्तपात्रसंक्रान्तिदर्शनं द्वितीयाङ्कादावारभन्त इति प्रथमाङ्कार्थाविच्छेदेनैव द्वितीयाङ्कस्यावतरणादङ्कावतार इति ।

पुनस्त्रिधा वस्तुविभागमाह—

नाट्यधर्ममपेक्ष्यैतत्पुनर्वस्तु त्रिधेष्यते ॥ ६३ ॥

केन प्रकारेण त्रैधं तदाह—

सर्वेषां नियतस्यैव श्राव्यमश्राव्यमेव च ।

तत्र ।

सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ॥ ६४ ॥

सर्वश्राव्यं यद्वस्तु तत्प्रकाशमित्युच्यते । यत्तु सर्वस्याश्राव्यं तत्स्वगतमितिशब्दाभिधेयम् ।

नियतश्राव्यमाह—

द्विधान्यन्नाट्यधर्माख्यं जनान्तमपवारितम् ।

अन्यत्तु=नियतश्राव्यं द्विप्रकारं जनान्तिकापवारितभेदेन ।

---

प्रथमाङ्केति—मालविकाग्निमित्रस्य प्रथमाङ्के प्रक्रान्तयोः=उक्तयोः प्रविष्टयोर्वा पात्रयोर्हरदत्तगणदासयोः संक्रान्तेः=शिष्यशिक्षाक्रमस्य दर्शने द्वितीयाङ्कारम्भे सर्वाण्येव पात्राण्यारभन्ते इत्यन्वयः । एतच्च तत्र प्रथमाङ्कान्तनिर्दिष्टे "श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता" इतिपद्ये द्रष्टव्यम् ॥ ६२ ॥

नाट्यधर्मम्=नाट्यशास्त्रमर्यादा । यस्य वस्तुनः सर्वेभ्यः प्रदर्शनेन प्रयोजनं न भवति रसव्याघातो वा भवति तत् सर्वेभ्यो न प्रदर्शनीयमित्यादिर्नाट्यधर्मो विज्ञेयः ॥ ६३ ॥

सर्वेषामिति—किंचित् सर्वेषां श्राव्यम्, किंचिन्नियतस्य नाम कस्यचिदेव श्राव्यम्, किंचिदश्राव्यमित्येवं त्रैविध्यमित्यन्वयः ॥ ६४ ॥

द्विधेति—नाट्यधर्मेति न जनान्तिकापवारितयोः संज्ञा—उक्तप्रकाशादीनामपि नाट्यधर्मत्वात् किं तु परिचायकमात्रम् ॥ ६५ ॥

---

१ 'तेन हि द्वावपि देव्याः प्रेक्षागेहं गत्वा संगीतकोपकरणं कृत्वा तत्रभवतो दूतं विसर्जयतम्, अथवा मृदङ्गशब्द एवैनमुत्थापयिष्यति ।' इति छाया ।

तत्र जनान्तिकमाह—

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ॥ ६५ ॥
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ।

यस्य न श्राव्यं तस्यान्तर ऊर्ध्वसर्वाङ्गुलं वक्रानामिकं त्रिपताकालक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकमिति ।

अथापवारितम्—

रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् ॥ ६६ ॥

परावृत्त्यान्यस्य रहस्यकथनमपवारितमिति ।

नाट्यधर्मप्रसङ्गादाकाशभाषितमाह—

किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥ ६७ ॥

*स्पष्टार्थः ।*

अन्यान्यपि नाट्यधर्माणि प्रथमकल्पादीनि कैश्चिदुदाहृतानि तेषामभारतीयत्वान्नाममालाप्रसिद्धानां केषांचिद्देशभाषात्मकत्वान्नाट्यधर्मत्वाभावाल्लक्षणं नोक्तमित्युपसंहरति—

इत्याद्यशेषमिह वस्तुविभेदजातं
रामायणादि च विभाव्य बृहत्कथां च ।
आसूत्रयेत्तदनु नेतृरसानुगुण्या-
च्चित्रां कथामुचितचारुवचःप्रपञ्चैः ॥ ६८ ॥

इति धनञ्जयकृतदशरूपकस्य प्रथमः प्रकाशः समाप्तः ।

---

वस्तुविभेदजातम्—वस्तु=वर्णनीयं तस्य विभेदजातं नाम भेदाः । रामायणादि बृहत्कथा च गुणाढ्यनिर्मितां विभाव्य आलोच्य । तदनु=एतदुत्तरम् । नेत्रिति—नेता वक्ष्यमाणलक्षणः रसाश्च तेषामानुगुण्याच्चित्राम्=चित्ररूपां कथाम्=आख्यायिकाम् । चारूणि यानि वचांसि तेषां प्रपञ्चै-

---

परावृत्य=मुखमन्यदिशं कृत्वा ॥ ६६ ॥
किमिति—उदेतदाकाशभाषितोदाहरणदर्शनेन स्पष्टं भविष्यति ॥ ६७ ॥
तेषाम्=नायकस्य रसानां चानुगुण्यात्=आनुरूप्यात् । स्पष्टमन्यत् सर्वम् ॥ ६८ ॥
॥ इति सावलोकदशरूपकप्रथमप्रकाशस्य प्रभाख्यव्याख्या समाप्ता ॥

विस्तरैरासूत्रयेदनुप्रथयेत् । तत्र बृहत्कथामूलं मुद्राराक्षसम्—

" चाणक्यनाम्ना तेनाथ शकटालगृहे रहः ।
कृत्यां विधाय सहसा सपुत्रो निहतो नृपः ॥
योगानन्दयशःशेषे पूर्वनन्दसुतस्ततः ।
चन्द्रगुप्तः कृतो राजा चाणक्येन महौजसा ॥"

इति बृहत्कथायां सूचितम्, श्रीरामायणोक्तं रामकथादि ज्ञेयम् ॥

॥ इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके
प्रथमः प्रकाशः समाप्तः ॥

---

अथ

## द्वितीयः प्रकाशः।

रूपकाणामन्योन्यं भेदसिद्धये वस्तुभेदं प्रतिपाद्येदानीं नायकभेद प्रतिपाद्यते—

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ १ ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥ २ ॥

नेता नायको विनयादिगुणसपन्नो भवतीति।

तत्र विनीतो यथा वीरचरिते—

"यद्ब्रह्मवादिभिरुपासितवन्द्यपादे विद्यातपोव्रतनिधौ तपतां वरिष्ठे।
दैवात्कृतस्त्वयि मया विनयापचारस्तत्र प्रसीद भगवन्नयमञ्जलिस्ते॥"

मधुर-प्रियदर्शन यथा तत्रैव—

"राम राम नयनाभिरामतामाशयस्य सदृशीं समुद्वहन्।
अप्रतर्क्यगुणरामणीयक सर्वथैव हृदयंगमोऽसि मे॥"

त्यागी=सर्वस्वदायकः यथा—

"त्वच कर्णः शिबिर्मांसं जीवं जीमूतवाहन।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम्॥"

दक्ष-क्षिप्रकारी यथा वीरचरिते—

"स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनु।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत्॥"

प्रियंवद-प्रियभाषी यथा तत्रैव—

"उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरु-
र्वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः।

द्वितीये प्रकाशे प्रथमं नायकसामान्यलक्षणमाह—नेतेति।

सर्वस्वदायक=यथायोग्यं सर्वस्वदायक सर्वस्वदानसमर्थ इत्यर्थ, न तु सर्वदा सर्वस्मै सर्वस्वदायक।

त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥"

रक्तलोकः यथा तत्रैव—

"त्रय्यास्त्राता यस्तवायं तनूज-
स्तेनाद्यैव स्वामिनस्ते प्रसादात् ।
राजन्वन्तो रामभद्रेण राज्ञा
लब्धक्षेमाः पूर्णकामाश्चरामः ॥"

एवं शौचादिष्वप्युदाहार्यम् । तत्र शौचं नाम मनोनैर्मल्यादिना कामाद्यनभिभूतत्वम्, यथा रघौ—

"का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥"

वाग्मी यथा हनुमन्नाटके—

"बाह्वोर्बलं न विदितं न च कार्मुकस्य
त्रैयम्बकस्य तनिमा तत एष दोषः ।
तच्चापलं परशुराम मम क्षमस्व
डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ॥"

रूढवंशो यथा—

"ये चत्वारो दिनकरकुलक्षत्रसंतानमल्ली-
मालाम्लानस्तनकमधुपा जज्ञिरे राजपुत्राः ।
रामस्तेषामचरमभवस्ताडकाकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥"

स्थिरो वाङ्मनःक्रियाभिरचञ्चलः यथा वीरचरिते—

"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेव दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥"

---

रक्तो लोको यस्मिन् स रक्तलोकः । वाग्मी—वाक्पटुः ।

राम इत्यत्र—

वसन्ति हि प्रेम्णि गुणा न वस्तुनि न मन्यसे हंस ! हरी गतोऽन्यथा ।
दृषद्दृषदो प्रेमगुणो समारसदो कश्चिद् यथा दाशरथो यथार्थतः ॥

इति मे विभावनीयम् ।

यथा वा भर्तृहरिशतके—

"प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥"

युवा प्रसिद्धः । बुद्धिर्ज्ञानम् । गृहीतविशेषकरी तु प्रज्ञा यथा मालविकाग्निमित्रे—

"यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला ॥"

स्पष्टमन्यत् ।

नेतृविशेषानाह—

**भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् ।**

यथोद्देशं लक्षणमाह—

**निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ॥ ३ ॥**

सचिवादिविहितयोगक्षेमत्वाच्चिन्तारहितः अत एव गीतादिकलाविष्टो भोगप्रवणश्च शृङ्गारप्रधानत्वाच्च सुकुमारसत्त्वाचारो मृदुरिति ललितः यथा रत्नावल्याम्—

"राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥"

अथ शान्तः—

**सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः ।**

---

भाविकम्=भावाश्रयं नृत्यमित्यर्थः । तस्यै=मालविकायै ॥ २ ॥

भेदैरिति—अयम्=नायको ललितशान्तोदात्तोद्धतैर्भेदैश्चतुर्धा भवतीत्यन्वयः । ललितादिपदेभ्यः पूर्वं धीरपद सयोज्यं तेन धीरललितो धीरशान्तो धीरोदात्तो धीरोद्धत इति च सज्ञा जायते ।

अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य परिरक्षणं क्षेम । अत एव=चिन्तारहितत्वादेव । सुकुमारौ=कोमलौ चित्तव्यवहारौ यस्य स सुकुमारसत्त्वाचारः ॥ ३ ॥

विनयादिनेतृसामान्यगुणयोगी धीरशान्तो द्विजादिक इति विप्रवणिक्सचिवादीनां प्रकरणनेतॄणामुपलक्षणम्, विवक्षितं चैतत् तेन नैश्चिन्त्यादिगुणसंभवेऽपि विप्रादीनां शान्ततैव न लालित्यं यथा मालतीमाधव-मृच्छकटिकादौ माधवचारुदत्तादिः ।

" तत उदयगिरेरिवैक एव
　　स्फुरितगुणद्युतिसुन्दरः कलावान् ।
　इह जगति महोत्सवस्य हेतु-
　　र्नयनवतामुदियाय बालचन्द्रः ॥"

इत्यादि । यथा वा—

" मखशतपरिपूतं गोत्रमुद्भासितं यत्
　　सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
　मम निधनदशायां वर्तमानस्य पाप-
　　स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् " ( इत्यादि )

अथ धीरोदात्तः—

**महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ॥ ४ ॥**
**स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ।**

महासत्त्वः=शोकक्रोधाद्यनभिभूतान्तःसत्त्वः, अविकत्थनः=अनात्मश्लाघनः, निगूढाहङ्कारः=विनयच्छन्नावलेपः । दृढव्रतः=अङ्गीकृतनिर्वाहको धीरोदात्तः यथा नागानन्दे—" जीमूतवाहनः—

　शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
　तृप्तिं न पश्यामि तवैव तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥"

यथा च रामं प्रति—

" आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
　न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥"

---

द्विजादिक इतीति—द्विजादिक इत्यपरिपदं विप्रादीनकुल्लार्थं संग्रह-मित्यर्थः । प्रकरणपदेन "नाटकमथ प्रकरणम्" इति नाटकप्रकरणयोर्भेदो भाव । एतत्सर्वसम्मतं विप्रादीनां विधिप्राप्तमित्यर्थं किं वा एतदुक्तिः द्विजप्रत्यनावरूपनमादिपदेनोपस्थितो विवक्षितो तेन च विवक्षेन विप्रा-दीनां धीरशान्तत्वमेव नियमतोऽन्यार्थं । "चारुदत्तादि" इत्यत्र "इत्या एव नन्दक" इति केचि ।

यच्च केषाचित्स्थैर्यादीनां सामान्यगुणानामपि विशेपलक्षणे क्वचित्संकीर्तनं तत्तेषां तत्राधिक्यप्रतिपादनार्थम् ।

ननु च कथं जीमूतवाहनादिर्नागानन्दादावुदात्त इत्युच्यते ? औदात्त्यं हि नाम सर्वोत्कर्षेण वृत्तिः तच्च विजिगीषुत्व एवोपपद्यते जीमूतवाहनस्तु निर्जिगीषुतयैव कविना प्रतिपादितः यथा—

" तिष्ठन्भाति पितु. पुरो भुवि यथा सिंहासने किं तथा
यत्संवाहयतः सुखं हि चरणौ तातस्य किं राज्यतः ।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुण. ॥"

इत्यनेन ।

" पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम् ।
वनं याम्यहमप्येष यथा जीमूतवाहनः ॥ "

इत्येनेन च, अतोऽस्यात्यन्तशमप्रधानत्वात्परमकारुणिकत्वाच्च वीतरागवच्छान्तता । अन्यच्चात्रायुक्तं यत्तथाभूतं राज्यसुखादौ निरभिलाषं नायकमुपादायान्तरा तथाभूतमलयवत्यनुरागोपवर्णनम् । यच्चोक्तम्—'सामान्यगुणयोगी द्विजादिर्धीरशान्त.' इति तदपि पारिभाषिकत्वादवास्तवमित्यभे-

---

यच्चेति—स्थैर्यादयो हि सामान्यतो नायकमात्रस्य गुणा अथापि यत्तेषा स्थैर्यादीना सामान्यगुणाना विशेपलक्षणे=धीरोदात्तादिनायकविशेपलक्षणे सङ्कीर्तनम्=कथन तत् तेषाम्=स्थैर्यादीनां तत्र=धीरोदात्तादावाधिक्यप्रतिपादनार्थमित्यर्थ –यथा धीरोदात्तस्य स्थैर्यलोपो कदापि न भवतीति ।

शङ्कते—नन्विति । नागानन्दादौ यो जीमूतवाहनादिः स उदात्त इति कथमुच्यते इत्यन्वय । सर्वोत्कर्षेण वृत्ति —सर्वेम्य. स्वोत्कर्षसपादनम् (वृत्ति =वर्तन स्थिति ) तच्च=औदात्य च ( उदात्तत्व च ) । अस्य=जीमूतवाहनस्य । अत्र= नागानन्दे । अयुक्तमिति–राज्यसुखादावपि निरभिलाषस्य जीमूतवाहनस्य मलयवत्यनुरागोपवर्णनप्राप्ता स्त्रीसुखाभिलाषा सर्वथाऽयुक्तेत्यर्थ । उक्तप्रकारेण जीमूतवाहनादेरुदात्तत्वाभावे प्राप्ते निर्जिगीषुतया यत् शान्तत्व प्राप्त तत्रोक्तशान्तलक्षणविषयक शङ्कान्तरमुद्घाटयति–यच्चोक्तमिति, धीरशान्तस्य निरभिलाषित्वेन "नेता विनीत " इत्यादिपूर्वोक्तदक्षत्वादिसामान्यगुणयोगोऽपि न समवर्तीति सामान्यगुणयोगित्व पारिभाषिकमेवेति प्राप्त पारिभाषिकत्वाद् अवास्तवम्=मिथ्याभूतमेव तेन च सामान्यगुणयोगित्व विशेषणम् अभेदकम्=नायकान्तरेभ्य.

दकम् । अतो वस्तुस्थित्या बुद्ध-युधिष्ठिर-जीमूतवाहनादिव्यवहाराः शान्ततामाविर्भावयन्ति ।

अत्रोच्यते—यत्तावदुक्तं सर्वोत्कर्षेण वृत्तिरौदात्त्यमिति न तज्जीमूतवाहनादौ परिहीयते—न ह्येकरूपैव विजिगीषुता य केनापि शौर्यत्यागदयादिनाऽन्यानतिशेते स विजिगीषु, न य परापकारेणार्थग्रहादिप्रवृत्तः, तथात्वे च मार्गदूषकादेरपि धीरोदात्तत्वप्रसक्तिः । रामादेरपि जगत्पालनीयमिति दुष्टनिग्रहे प्रवृत्तस्य नान्तरीयकत्वेन भूम्यादिलाभ । जीमूतवाहनादिस्तु प्राणैरपि परार्थसंपादनाद्विश्वमप्यातिशेत इत्युदात्ततम.। यच्चोक्तम्—" तिष्ठन्भाति " इत्यादिना विषयसुखपराङ्मुखतेति तन् सत्यम्—कार्पण्यहेतुषु स्वसुखतृष्णासु निरभिलाषा एव जिगीषव', तदुक्तम्—

"स्वसुखनिरभिलाष खिद्यसे लोकहेतो.
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परिताप छाययोपाश्रितानाम् ॥"इत्यादिना ।

मलयवत्यनुरागोपवर्णनं त्वऽशान्तरसाश्रयं शान्तनायकता प्रत्युत निषेधति । शान्तत्वं चानहङ्कृतत्वं तच्च विप्रादेरौचित्यप्राप्तमिति वस्तुस्थित्या विप्रादेः शान्तता न स्वपरिभाषामात्रेण । बुद्धजीमूतवाहनयोस्तु

---

शान्तस्य व्यावर्तक न सम्भवति—शान्तस्य विशेषणान्तरं च नास्तीति द्विजादिकस्य सर्वस्यैव किं वा सर्वेषामेव धीरोदात्तादिनायकानां शान्तत्वं प्राप्तमित्यर्थ । प्रकृतशङ्कामुपसंहरति— अत इति, यतो जीमूतवाहनादेरुक्तप्रकारेणोदात्तत्वं न सम्भवति अत, किं वा शान्तरसानुगुण्यादित्यर्थ ।

उत्तरमाह—अत्रोच्यते इत्यादिना ।

तथात्वे=परापकारेणार्थग्रहादिप्रवृत्तस्य विजिगीषुत्वे मार्गदूषकादे=मार्गे लुण्ठनपरस्यापि धीरोदात्तत्वं स्याद् न चैतदिष्टमित्यर्थ । नान्तरीयकत्वेन=अनुषङ्गादितियावत् दुष्टनृपतिनिग्रहप्रवृत्तस्य अनुषङ्गात् भूम्यादिलाभसंभवादित्यर्थ ।

जीमूतवाहनस्य प्रतिपादिता शान्तनायकता निराचष्टे—मलयवतीति । "अशान्तरसाश्रयम्" इति मलयवत्यनुरागोपवर्णनविशेषणं तस्य च 'शान्तरसप्रतिद्वन्द्वि' इत्यर्थ । शान्तत्वस्योक्त पारिभाषिकत्वं पराकरोति—शान्तत्वमिति । भेद इति—

कारुणिकत्वाविशेषेऽपि सकामनिष्कामकरुणत्वादिधर्मत्वाद्भेदः । अतो जीमूतवाहनादेर्धीरोदात्तत्वमिति ।

अथ धीरोद्धत —

**दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः ॥ ५ ॥**
**धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थनः ।**

दर्प =शौर्यादिमद, मात्सर्यम्-असहनता, मन्त्रबलेनाविद्यमानवस्तुप्रकाशनम्=माया, छद्म-वञ्चनामात्रम्, चल =अनवस्थितश्चण्ड'=रौद्र, स्वगुणशंसी-विकत्थनो धीरोद्धतो भवति यथा जामदग्न्य.—"कैलासोद्धारसारत्रिभुवनविजय—" इत्यादि । यथा च रावण —"त्रैलोक्यैश्वर्यलक्ष्मीहठहरणसहा बाहवो रावणस्य ।" इत्यादि ।

धीरललितादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिन., वत्सवृषभमहोक्षादिवन्न जात्या कश्चिदवस्थितरूपो ललितादिरस्ति, तदा हि महाकविप्रबन्धेषु विरुद्धानेकरूपाभिधानमसंगतमेव स्यात्—जातेरनपा-

---

बुद्धो निष्कामकारुणिको जीमूतवाहनस्तु सकामकारुणिक इति धर्मभेद । "धीरोदात्तत्वम्" इत्यत्र सिद्धमिति शेष ॥ ५ ॥

यथोक्तेति-धीरललितादिलक्षणोक्ता ये निश्चिन्तत्वादयो गुणास्तै समारोपिता या धीरललितत्वाद्यवस्थास्तद्बोधका धीरललितादिशब्दा सन्ति तस्माद् यथा वत्सावस्थानन्तरमेव वृषभावस्था तदनन्तरमेव च महोक्षावस्थेति वत्सस्य वत्सत्वमेव नियत न वृषभत्वमुपपद्यते तथा प्रकृते नियमो नास्ति किं त्वेकस्यापि महापुरुषस्य तत्तद्गुणसबन्धेन तत्तन्नायकत्वमुपपद्यते इत्यर्थ । तदा हि—यदि ललितत्वादिक नियतं स्याद् नाम यदि ललितत्वशान्तत्वादिक परस्पर व्यधिकरणमेव स्यात्तदा ह्येकस्य नायकस्य परस्परविरुद्धेन ललितत्वशान्तत्वादिरूपेणाऽभिधानम्=प्रतिपादनमसंगतमेव स्यादित्यर्थ । उक्ते हेतुमाह—जातेरिति, यदि ललितत्वादिकं जाति स्यात्तदा जातेरनपायित्वात् विनाशासम्भवाद् ललिते ललितत्वसत्त्वात् तद्विरुद्ध शान्तत्व न स्यादेवेति न ललितादिशब्दा जातिवाचिन किं तु गुणवाचिनस्तया च तत्तद्गुणविवक्षया तत्तन्नायकत्वमेकस्याप्युपपद्यते यथा एक एव नायक प्रियासमीपे ललित युद्धादिषु धीर गुर्वादिसमीपे च शान्त इति ।

किं वा वत्सवृषभेत्युक्ते उदाहरणं यथैकस्या एव व्यक्तेरवस्थाभेदेन वत्स

यित्वात्, तथा च भवभूतिनैक एव जामदग्न्य.—

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥"

इत्यादिना रावणं प्रति धीरोदात्तत्वेन. "कैलासोद्धारसार—"इत्यादिभिश्च रामादीन्प्रति प्रथमं धीरोद्धतत्वेन. पुन —"पुण्या ब्राह्मणजाति" इत्यादिभिश्च धीरशान्तत्वेनोपवर्णित । न चावस्थान्तराभिधानमनुचितम्—अङ्गभूतनायकाना नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात् । अङ्गिनस्तु रामादेरेकप्रबन्धोपात्तान् प्रत्येकरूपत्वादारम्भोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यं यथोदात्तत्वाभिमतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति ।

वक्ष्यमाणाना च दक्षिणाद्यवस्थानाम् "पूर्वां प्रत्यन्ययाहृत:" इति नित्यसापेक्षत्वेनाविर्भावादुपात्तावस्थातोऽवस्थान्तराभिधानमङ्गाङ्गिनोरप्यविरुद्धम् ।

---

त्व वृषभत्व चोपपद्यते तथा प्रकृतेप्येकस्य तत्तद्गुणभेदेन ललितत्व शान्तत्वादिक चोपपद्यते इत्यर्थ । अस्मिन् पक्षे नेत्यत्र नत्विति पाठो युक्त । उक्ते भवभूतिग्रन्थमुदाहरति—तथा चेति ।

नन्वेकस्यैव जामदग्न्यस्य धीरोदात्तत्वावस्थामभिधाय धीरोद्धतत्वाद्यवस्थान्तरस्याभिधानमनुचितं स्यादित्याशङ्क्याह—न चेति । परिहारहेतुमाह—अङ्गभूतेति, नायकान्तरापेक्षया=प्रधाननायकापेक्षयाऽङ्गभूतानाम्=अप्रधानानां नायकानामव स्थाभूत धीरोदात्तत्वादिप्रयोजक महासत्वादिकमव्यवस्थितं भवति, उक्तस्थले च जामदग्न्योऽप्रधाननायक एवेति तस्यावस्थान्तराभिधानं नानुचितमित्यर्थ । प्रधाननायकस्य त्ववस्थान्तराभिधानमनुचितमेवेत्याह—अङ्गिन इति, अङ्गिन =प्रधाननायकस्य । एकप्रबन्धोपात्तान्=तत्प्रबन्धोक्तपात्राणि प्रति । प्रधाननायकस्यावस्थान्तरोपादाने उदाहरणमाह—यथेति, छद्मना वधेनाऽमहासत्त्वं जायते इति अमहासत्त्वतया=महासत्त्वत्वाभावापत्त्या स्वावस्थापरित्याग=उदात्तत्वप्रयोजकमहासत्त्वावस्थापरित्याग ।

वक्ष्यमाणदक्षिणाद्यवस्थाना मध्ये तु प्रधाननायकस्याप्यवस्थान्तराभिधान न विरुद्ध तासा परस्पर तादृशमहाविरोधाभावादित्याह—वक्ष्यमाणानामिति, नित्यसापेक्षत्वेनेति—प्रथमं नायको ज्येष्ठनायिकायां सहृदयत्वाद् दक्षिणो भवति तदनन्तरमेव कदाचिद्गूढविप्रियाचरणेन शठो व्यक्ताङ्गविकारेण च धृष्टो भवतीत्युप-

अथ शृङ्गारनेत्रऽवस्थाः—

**स दाक्षणः शठो धृष्टः पूर्वां प्रत्यन्यया हृतः ॥ ६ ॥**

नायकप्रकरणात्पूर्वां नायिकां प्रत्यन्ययाऽपूर्वनायिकयापहृतचित्तव्य-वस्थो वक्ष्यमाणभेदेन स चतुरवस्थः । तदेवं पूर्वोक्तानां चतुर्णां प्रत्येकं चतुरवस्थत्वेन षोडशधा नायकः ।

तत्र—

**दक्षिणोऽस्यां सहृदयः,**

योऽस्यां ज्येष्ठायां हृदयेन सह व्यवहरति स दक्षिणः यथा ममैव—

'प्रसीदत्यालोके किमपि किमपि प्रेमगुरवो
रतिक्रीडाः कोऽपि प्रतिदिनमपूर्वोऽस्य विनयः ।
सविश्रम्भः कश्चित्कथयति च किंचित्परिजनो
न चाहं प्रत्येमि प्रियसखि किमप्यस्य विकृतिम् ॥'

यथा वा—

"उचितः प्रणयो वरं विहन्तुं बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां ननु पूर्वाभ्यधिकोऽपि भावशून्यः ॥"

अथ शठः—

**गूढविप्रियकृच्छठः ।**

दक्षिणस्यापि नायिकान्तरापहृतचित्ततया विप्रियकारित्वाविशेषेऽपि सहृदयत्वेन शठाद्विशेषः, यथा—

---

रावस्थाया.=धृष्टत्वाद्यवस्थाया, पूर्वपूर्वशठत्वाद्यवस्थासापेक्षत्वेन प्रादुर्भावात् अङ्गाङ्गिनो=अप्रधानस्य प्रधानस्यापि च नायकस्योपात्तदक्षिणत्वाद्यवस्यातो शठत्वाद्यवस्थान्तराभिधान विरुद्ध न भवतीति भाव. ।

नायकप्रकरणादिति—अत्र नायकस्य प्रकरणमस्तीति स्त्रीलिङ्गेन द्वितीयान्तपूर्वापदेनात्र मूले नायिका ग्राह्या तथा च पूर्वां प्रति नाम प्रथमनायिकापेक्षयाऽन्यया नवीननायिकयाऽपहृतचित्तो दक्षिणशठधृष्टभेदैस्त्रिविधो नायको भवति वक्ष्यमाणेनानुकूलभेदेन सह स.=नायकश्चतुर्विधो जायते इत्यर्थ ॥ ६ ॥

सहृदय=प्रीतियुक्तः ।

विशेष इति—शठः पूर्वस्या नायिकायां सहृदयः=प्रीतियुक्तो न भवति दक्षिणश्च भवतीति शठदक्षिणयोर्विशेषः ।

" शठाऽन्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्काचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥"

अथ धृष्टः—

**व्यक्ताङ्गवैकृतो धृष्टः,**

यथामरुशतके—

" लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥"

भेदान्तरमाह—

**अनुकूलस्त्वेकनायिकः ॥ ७ ॥**

यथा—

" अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥"

किमवस्थः पुनरेषां वत्सराजादिर्नाटिकानायकः स्यात् ? इत्युच्यते—पूर्वमनुपजातनायिकान्तरानुरागोऽनुकूलः, परतस्तु दक्षिणः । ननु च गूढविप्रियकारित्वाद्व्यक्ततरविप्रियत्वाच्च शाठ्यधार्ष्ट्येऽपि कस्मान्न भवतः, न– तथाविधविप्रियत्वेऽपि वत्सराजादेराप्रबन्धसमाप्तेर्ज्येष्ठां नायिकां प्रति सहृदयत्वाद्दक्षिणतैव । न चोभयोर्ज्येष्ठाकनिष्ठयोर्नायकस्य स्नेहेन न भ-

---

व्यक्तेति–व्यक्तान्यङ्गवैकृतानि=अन्यनायिकासंभोगचिह्नानि यस्य स व्यक्ताङ्गवैकृतो धृष्टः ।

भेदान्तरमिति–उक्तदक्षिणशठधृष्टेतित्रिविधभेदातिरिक्तं चतुर्थं भेदमाहेत्यर्थः ।

एका नायिका यस्य स एकनायिकः=एकमात्रानुरक्त इत्यर्थः ॥ ७ ॥

पूर्वम्=सागरिकादर्शनात् पूर्वम् । परतः=सागरिकादर्शनानन्तरम् ।

भवत इत्यत्र वत्सराजादेरिति शेषः । ज्येष्ठां वासवदत्तां प्रति ।

वितव्यमिति वाच्यम्, अविरोधात् । महाकविप्रबन्धेषु च—

" स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥"

इत्यादावपक्षपातेन सर्वनायिकासु प्रतिप्रत्युपनिबन्धनात् ।

तथा च भरतः—

" मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति ।
अवमानितश्च नार्या विरज्येत स तु भवेज्ज्येष्ठः "

इत्यत्र ' न रागं याति न मदनस्य वशमेति' इत्यनेनाऽसाधारण एकस्या स्नेहो निषिद्धो दक्षिणस्येति, अतो वत्सराजादेराप्रबन्धसमाप्ति स्थितं दाक्षिण्यमिति । षोडशानामपि प्रत्येकं ज्येष्ठमध्यमाधमत्वेनाष्टाचत्वारिंशन्नायकभेदा भवन्ति ।

सहायानाह—

**पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः ।**
**तस्यैवानुचरो भक्तः किंचिदूनश्च तद्गुणैः ॥ ८ ॥**

प्रागुक्तप्रासङ्गिकेतिवृत्तविशेषः पताका तन्नायकः पीठमर्दः प्रधानेतिवृत्तनायकस्य सहायः, यथा मालतीमाधवे मकरन्दः रामायणे सुग्रीवः ।

सहायान्तरमाह—

**एकविद्यो विटश्चान्यः, हास्यकृच्च विदूषकः ।**

---

अविरोधादिति—यथाऽनेकेषु पुत्रेषु स्नेहो भवति तथाऽनेकासु नायिकास्वपि न स्नेहानुपपत्तिरित्यर्थः ।

" व्यक्ततरविप्रियत्वात् " इत्यस्य स्थाने 'व्यक्ततराङ्गविकारात्' इत्येव पाठो युक्तः । किंवा विप्रियत्वं प्रतिकूलाचारित्वं ज्ञेयम् ।

प्रतिपत्ति=बुद्धि. सा चात्र प्रीतिरूपा ग्राह्या ।

ज्येष्ठ=उत्तम. । इत्यनेति—उक्तवचने दक्षिणस्यैकस्या नायिकायामसाधारणः=अनन्यसाधारण. ( तदतिरिक्तनायिकान्तरतिरस्कारकारी ) स्नेहो निषिद्ध.=न भवतीत्युक्त तेन च स्वसकलनायिकासु साम्य प्राप्तं वत्सराजस्याप्यासमाप्ति वासवदत्तारत्नावल्योः प्रेमसाम्येन दक्षिणत्व प्राप्तमित्यर्थः ।

तस्य=प्रधाननायकस्य । तद्गुणैः=प्रधाननायकगुणैः ॥ ८ ॥

गीतादिविद्यानां नायकोपयोगिनीनामेकस्या विद्याया वेदिता विटः, हास्यकारी विदूषकः, अस्य विकृताकारवेषादित्वं हास्यकारित्वेनैव लभ्यते यथा शेखरको नागानन्दे विटः, विदूषकः प्रसिद्ध एव ।

अथ प्रतिनायकः—

लुब्धो धीरोद्धतः स्तब्धः पापकृद्व्यसनी रिपुः ॥ ९ ॥

तस्य नायकस्येत्थंभूतः प्रतिपक्षनायको भवति यथा रामयुधिष्ठिरयो रावणदुर्योधनौ ।

अथ सात्त्विका नायकगुणाः—

शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।
ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥ १० ॥

तत्र ( शोभा यथा )—

नीचे घृणाऽधिके स्पर्धा शोभायां शौर्यदक्षते ।

नीचे घृणा यथा वीरचरिते—

" उत्तालताडकोत्पातदर्शनेऽप्यप्रकम्पितः ।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥"

गुणाधिकैः स्पर्धा यथा—

" एतां पश्य पुरः स्थलीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डलम् ॥"

शौर्यशोभा यथा ममैव—

' अन्त्रैः स्वैरपि संयताग्रचरणो मूर्च्छाविरामक्षणे
स्वाधीनव्रणिताङ्गशस्त्रनिचितो रोमोद्गमं वर्मयन् ।
भग्नानुद्वलयन्निजान्परभटान्संतर्जयन्निष्ठुरं
धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥ '

---

इत्थम्भूतः=लुब्धत्वाद्युक्तदोषाक्रान्तः । प्रतिपक्षनायकः=शत्रुः ॥ ९ ॥

सात्त्विकाः=मनस्संबन्धिनः । उक्तं च " रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते । " इति ॥ १० ॥

---

१ 'धैर्य' इति पाठान्तरम् २ " सात्त्विकाः " इति पाठान्तरम् ।

दक्षशोभा यथा वीरचरिते—

" स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥"

अथ विलासः—

गतिः सधैर्या दृष्टिश्च विलासे सस्मितं वचः ॥ ११ ॥

यथा—

" दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥"

अथ माधुर्यम्—

श्लक्ष्णो विकारो माधुर्यं संक्षोभे सुमहत्यपि ।

महत्यपि विकारहेतौ मधुरो विकारो माधुर्यं यथा—

" कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥"

अथ गाम्भीर्यम्—

गाम्भीर्यं यत्प्रभावेन विकारो नोपलक्ष्यते ॥ १२ ॥

मृदुविकारोपलम्भाद्विकारानुपलब्धिरन्येति माधुर्यादन्यद्गाम्भीर्यम्,

यथा—

" आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥"

अथ स्थैर्यम्—

व्यवसायादचलनं स्थैर्यं विघ्नकुलादपि ।

माधुर्ये मृदुविकारस्तत्प्रतीतिश्च भवति गाम्भीर्ये तु जायमानस्य मृदोरपि विकारस्योपलब्धिर्न भवतीति माधुर्यगाम्भीर्ययोर्विशेषः ॥ १२ ॥

विघ्नकुलात्-विघ्नसमूहे सत्यपि व्यवसायात्-स्वकर्तव्यादचलनं स्थैर्यमित्यर्थः ।

यथा वीरचरिते—

" प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥ "

अथ तेजः—

**अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि ॥ १३ ॥**

यथा—

" ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीदर्शनाद्येन न जीवन्ति मनस्विनः ॥ "

अथ ललितम्—

**शृङ्गाराकारचेष्टात्वं सहजं ललितं मृदु ।**

स्वाभाविकः शृङ्गारो मृदुः तथाविधा शृंगारचेष्टा च ललितम्, यथा ममैव—

' लावण्यमन्मथविलासविजृम्भितेन
स्वाभाविकेन सुकुमारमनोहरेण ।
किंवा ममैव सखि योऽपि ममोपदेष्टा
तस्यैव किं न विषमं विदधीत तापम् ॥ '

अथौदार्यम्—

**प्रियोक्त्याऽऽजीविताद्दानमौदार्यं सदुपग्रहः ॥ १४ ॥**

प्रियवचनेन सहाऽऽजीवितावधेर्दानमौदार्यं सतामुपग्रहश्च यथा नागानन्दे—

" शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥"

सदुपग्रहो यथा—

" एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥ "

---

प्राणात्ययेष्वपि=प्राणसङ्कटसमयेष्वपि ॥ १३ ॥

स्वाभाविकः=अकृत्रिमः, किं वा स्वभावेनेत्यर्थः । तथाविधा=स्वाभाविकी ।

सदुपग्रहः=सत्स्वानुकूल्यमिति यावत् यथोदाहरणे सद्भ्यः स्वसर्वनिवेदनम् ॥ १४ ॥

अथ नायिका—

**स्वान्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा ।**

तद्गुणेति यथोक्तसंभवे नायकसामान्यगुणयोगिनी नायिकेति, स्वस्त्री परस्त्री साधारणस्त्रीत्यनेन विभागेन त्रिधा ।

तत्र स्वीयाया विभागगर्भं सामान्यलक्षणमाह—

**मुग्धा मध्या प्रगल्भेति स्वीया शीलार्जवादियुक् ॥ १५ ॥**

शीलं सुवृत्तम्, पतिव्रताऽकुटिला लज्जावती पुरुषोपचारनिपुणा स्वीया नायिका ।

तत्र शीलवती यथा—

"[1]कुलवालिआए पेच्छह जोव्वणलाअण्णविब्भमविलासा ।
पवसन्ति व्व पवसिए एन्ति व्व पिये घरं एन्ते ॥"

आर्जवादियोगिनी यथा—

"[2]हसिअमविआरमुद्धं भमिअं विरहिअविलाससुच्छाअम् ।
भणिअं सहावसरलं धण्णाण घरे कलत्ताणम् ॥"

लज्जावती यथा—

"[3]लज्जापज्जत्तपसाहणाइं परतित्तिणिप्पिवासाइं ।
अविणअदुम्मेहाइं धण्णाण घरे कलत्ताइं ॥"

सा चैवंविधा स्वीया मुग्धा-मध्या-प्रगल्भाभेदात्त्रिविधा ।

अन्या=परस्त्री । स्वा=स्वकीया ।

पुरुषोपचारनिपुणा= पतिसेवाप्रवीणा ।

"अविणअदुम्मेहाइम्=अविनयदुर्मेधांसि" इत्यस्य 'अविनये दुर्मेधांसि=अविनयो न कर्तव्य इत्येवमविनयविषयदुष्प्रज्ञानवन्ति' इत्यर्थः अविनयशून्यानीतियावत् ॥ १५ ॥

---

१ "कुलबालिकायाः प्रेक्षध्व यौवनलावण्यविभ्रमविलासाः ।
प्रवसन्तीव प्रवसिते आगच्छन्तीव प्रिये गृहमागते ॥" इति च्छाया ।

२ "हसितमविचारमुग्धं भ्रमितं विरहितविलाससुच्छायम् ।
भणितं स्वभावसरलं धन्यानां गृहे कलत्राणाम् ॥" इति च्छाया ।

३ "लज्जापर्याप्तप्रसाधनानि परतृप्तिनिष्पिपासानि ।
अविनयदुर्मेधांसि धन्यानां गृहे कलत्राणि ॥" इति च्छाया ।

तत्र—

मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि ।

प्रथमावतीर्णतारुण्यमन्मथा रमणे वामशीला सुखोपायप्रसादना मुग्धनायिका ।

तत्र वयोमुग्धा यथा—

" विस्तारी स्तनभार एष गमितो न स्वोचितामुन्नति
रेखोद्भासिकृतं वलित्रयमिदं न स्पष्टनिम्नोन्नतम् ।
मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली निर्मिता
रम्यं यौवनशैशवव्यतिकरोन्मिश्रं वयो वर्तते ॥"

यथा च ममैव—

' उच्छ्वसन्मण्डलप्रान्तरेखमाबद्धकुड्मलम् ।
अपर्याप्तमुरो वृद्धेः शंसत्यस्याः स्तनद्वयम् ॥ '

कामसुग्धा यथा—

" दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥"

रतवामा यथा—

" व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥"

मृदुः कोपे यथा—

" प्रथमजनिते बाला मन्यौ विकारमजानती
कितवचरितेनासज्याङ्के विनम्रमुखैव सा ।
चिबुकमलिकं चोन्नम्योच्चैरकृत्रिमविभ्रमा
नयनसलिलस्यन्दिन्योष्ठे रुदन्त्यपि चुम्बिता ॥ "

एवमन्येऽपि लज्जासंवृतानुरागनिबन्धना मुग्धाव्यवहारा निबन्धनीयाः, यथा—

" न मध्ये संस्कारं कुसुममपि बाला विसहते
न निःश्वासैः सुभ्रूर्जनयति तरङ्गव्यतिकरम् ।

---

लज्जासंवृता—लज्जाच्छादिता लज्जासंपन्ना इति यावत्, अनुरागनिबन्धना—अनुरागमूलका । किं वा लज्जया संवृतो योऽनुरागस्तन्निबन्धना ।

नवोढा पश्यन्ती लिखितमिव भर्तुः प्रतिमुखं
प्ररोहद्रोमाञ्चा न पिबति न पात्रं चलयति ॥"

अथ मध्या—

**मध्योद्यद्यौवनानङ्गा मोहान्तसुरतक्षमा ॥ १६ ॥**

संप्राप्ततारुण्यकामा मोहान्तरतयोग्या मध्या।

तत्र यौवनवती यथा—

" आलापान्भ्रूविलासो विरलयति लसद्बाहुविक्षिप्तियातं
नीवीग्रन्थिं प्रथिम्ना प्रतनयति मनाङ्मध्यनिम्नो नितम्बः।
उत्पुष्पत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तः स्मरेण
स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः॥"

कामवती यथा—

" स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभिः—
र्यदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालाकृष्टं पिबन्ति रसं प्रियाः॥"

मध्यासंभोगो यथा—

" तांव चिअ रइसमए महिलाणं विब्भमा विराअन्ति।
जाव ण कुवलयदलसच्छहाइ मउलेन्ति णअणाइं॥"[1]

एवं धीरायामधीरायां धीराधीरायामप्युदाहार्यम्।

अथास्या मानवृत्तिः—

**धीरा सोत्प्रासवक्रोक्त्या, मध्या साश्रु कृतागसम्।**
**खेदयेद्दयितं कोपादधीरा परुषाक्षरम् ॥ १७ ॥**

मोहान्तसुरतक्षमा=यस्य सुरतस्यान्ते नायिकाया मोहः=विवेकाभावः स्यात् तादृशसुरतक्षमा मध्येत्यर्थः ॥ १६ ॥

एवमिति—एवमेव धीराया अधीराया धीराधीरायाश्चोदाहरणानि विज्ञेयानीत्यर्थः।

मध्याया धीरात्वादिभेदेन त्रैविध्याद् मानवृत्तिमपि त्रिविधामाह—धीरेति। धीरापदेनात्र मध्याधीरा मध्यापदेन मध्याधीराधीरा अधीरापदेन चात्र मध्या-

१ " तावदेव रतिसमये महिलानां विभ्रमा विराजन्ते।
यावन्न कुवलयदलस्वच्छानि मुकुलयन्ति नयनानि॥" इति च्छाया।

मध्याधीरा कृतापराधं प्रियं सोत्प्रासवक्रोक्त्या खेदयेत् यथा माघे—

" न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥ "

धीराधीरा साश्रु सोत्प्रासवक्रोक्त्या खेदयेत्, यथाऽमरुशतके—

" बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ "

अधीरा साश्रु परुषाक्षरम्, यथा—

" यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि मादरं कृथाः ।
खण्डिताधरकलङ्कितं प्रियं शक्नुमो न नयनैर्निरीक्षितुम् ॥ "

एवमपरेऽपि व्रीडानुपहिताः स्वयमनभियोगकारिणो मध्याव्यवहारा भवन्ति यथा—

" स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे
विश्रम्भेऽपि गुरौ पयोधरभरोत्कम्पेऽपि वृद्धिं गते ।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रिय-
स्तन्वङ्ग्या हठकेशकर्षणघनाश्लेषामृते लुब्धया ॥ "

स्वतोऽनभियोगस्त्वं हठकेशकर्षणघनाश्लेषामृते लुब्धयेत्युत्प्रेक्षा-प्रतीतिः ।

---

ऽधीरा साश्रा । कृतागसमिति प्रियविशेषणम् । " साश्रु " " परुषाक्षरम् " इतिद्वयं क्रियाविशेषणम् । " परुषाक्षरम् " इत्यस्य परुषाक्षरैरित्यर्थः " मध्याधीरा " इति मूलोक्तस्य " धीरा " इतिपदस्य व्याख्या ।

धीराधीरा=मध्याधीराधीरा । अधीरा=मध्याऽधीरा । अत्र 'खेदयेत्' इति शेषः ।

व्रीडानुपहिताः=लज्जयाऽनधिष्ठिताः ।

स्वयमनभियोगकारिणः=मुग्धे स्वरति ( मध्या ) प्रवृत्तत्वेऽपि नि. स्वयमेव मुग्धे प्रवर्तते इति सर्वासु मध्यैव भवः ।

स्या इति-हठकेशकर्षणघनाश्लेषामृते लुब्धया तन्वङ्ग्या प्रियो नाभियुक्त इत्यर्थं नाभिव्य त्युत्प्रेक्षालङ्कारात् नायिकायाः स्वतोऽनभियोगस्याऽनुरागो ध्वन्यते. ॥ १७ ॥

" दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥"

न चानयोर्दाक्षिण्यप्रेमभ्यामेव व्यवहार अपि तु प्रेम्णापि यथा चैत-त्तयोक्तं दक्षिणलक्षणावसरे । एवं च धीरमध्या-अधीरमध्या-धीराधीरमध्या-धीरप्रगल्भा-अधीरप्रगल्भा-धीराधीरप्रगल्भाभेदानां प्रत्येकं ज्येष्ठाक-निष्ठाभेदाद्द्वादशानां वासवदत्ता-रत्नावलीवत्प्रबन्धनायिकानामुदाहरणा-नि महाकविप्रबन्धेष्वनुसर्तव्यानि ।

अथान्यस्त्री—

अन्यस्त्री कन्यकोढा च नान्योढाऽङ्गिरसे क्वचित् ॥ २० ॥
कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ।

नायकान्तरसंबन्धिन्यन्योढा यथा—

" दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मिन्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्थयः ॥ "

इयं त्वङ्गिनि प्रधाने रसे न क्वचिन्निबन्धनीयेति न प्रपञ्चिता ।

---

नचेति—ज्येष्ठायां दाक्षिण्येनैव न प्रेम्णा कनिष्ठायां च प्रेम्णैव व्यवहारो वर्तन मवतीति नियमो नास्ति किं तु ज्येष्ठायामपि प्रेम्णा व्यवहारो भवतीत्यर्थ । अनयोः—ज्येष्ठाकनिष्ठयो । एतत्—प्रेम्णा व्यवहारः । दक्षिणलक्षणावसरे " सहृद-यत्वेन शठादिशेष " इत्यनेनोक्तम् । वासवदत्तेति—अत्र वासवदत्ताया ज्येष्ठात्व रत्नावल्याश्च कनिष्ठात्वम् ।

अन्यस्त्रीति—परस्त्री द्विविधा—कन्यका परोढा च, तत्र कन्यकायाः परस्त्रीत्व-प्रयोजकमाह—कन्यकेति । परोढा च पुरुषान्तरेण विवाहिता अस्याश्च दृश्यश्रव्य भेदेन द्विविधेष्वपि काव्येष्वधिकारो नास्तीत्याह—नान्योढेति, अस्यैव व्याख्या—इय त्विति । कन्यानुरागस्त्वङ्गभूतशृङ्गारप्रयुक्तोऽपि मत्वङ्गीभूतशृङ्गारप्रयुक्तोऽपि भवतीत्याह—कन्यानुरागमिति । कुर्यादित्यत्र कविरिति शेष. ।

इयम्—परोढा । " प्रधाने रसे " इत्यस्य ' सन्दर्भे ' इत्यर्थ.—परनिकायाः

कन्यका तु पित्राद्यायत्तत्वादपरिणीताप्यन्यस्त्रीत्युच्यते तस्यां पित्रादिभ्योऽलभ्यमानायां सुलभायामपि परोपरोधस्वकान्ताभयात्प्रच्छन्नं कामित्वं प्रवर्तते यथा मालत्यां माधवस्य सागरिकायां च वत्सराजस्येति। तदनुरागश्च स्वेच्छया प्रधानाप्रधानरससमाश्रयो निबन्धनीयः यथा रत्नावलीनागानन्दयोः सागरिका-मलयवत्यनुराग इति।

**साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् ॥ २१ ॥**

तद्व्यवहारो विस्तरतः शास्त्रान्तरे निदर्शितः दिङ्मात्रं तु—

**छन्नकामसुखार्थाज्ञस्वतन्त्राहंयुपण्डकान्।**
**रक्तेव रञ्जयेदाढ्यान्निःस्वान्मात्रा विवासयेत् ॥२२॥**

छन्नं ये कामयन्ते ते छन्नकामाः श्रोत्रियवणिग्लिङ्गिप्रभृतयः, सुखार्थी=अप्रयासावाप्तधनः सुखप्रयोजनो वा, अज्ञो मूर्खः, स्वतन्त्रो निरङ्कुशः, अहंयुरहङ्कृतः, पण्डको वातपण्डादिः, एतान्बहुवित्तान् रक्तेव रञ्जयेदर्थार्थम्—तत्प्रधानत्वात्तद्वृत्तेः, गृहीतार्थान्कुट्टन्यादिना निष्कासयेत् पुनः प्रतिसंधानाय, इदं तासामौत्सर्गिकं रूपम्।

रूपकेषु तु—

**रक्तैव[1] त्वप्रहसने, नैषा दिव्यनृपाश्रये।**

प्रहसनवर्जिते प्रकरणादौ रक्तैवैषा विधेया यथा मृच्छकटिकायां वस-

---

काव्येष्वधिकाराभावात्। तस्याम्=कन्यायाम्। परोपरोध=पित्रादिकृतनिरोध। तदनुराग=कन्यानुराग. ॥ २१ ॥ मालत्यां माधवस्य परोपरोधात् सागरिकायां च वत्सराजस्य स्वकान्ताभयात् प्रच्छन्नकामित्वम्। तत्र सागरिकानुराग. प्रधानरस( शृङ्गार )समाश्रय', मलयवत्यनुरागश्चाऽप्रधानरस( शृङ्गार )समाश्रयः जीमूतवाहनस्य तत्रत्यनायकस्य प्राधान्येन शान्तरसनायकत्वादिति विवेकः।

वेश्यामाह—साधारणस्त्रीति।

तद्व्यवहार=वेश्याव्यवहार'। पण्डक.=नपुंसक'। तत्प्रधानत्वात्=धनप्रधानत्वात्। तद्वृत्ते.=वेश्यावृत्ते.। पुनरिति—स्वयं निष्कासने पुन समागमो न संभवति कुट्टिन्यादिद्वारा निष्कासने तु निष्कासितस्य धनलाभे जाते तादृशधनग्रहणार्थं पुनरपि समागम' संभवतीत्यर्थ.। तासाम्=वेश्यानाम्। रूपम्=लक्षणम् ॥ २२ ॥

एषा=वेश्या। दिव्यो नृपो नायको यत्र तादृशनाटकादौ तु वेश्या नायिका

---

[1] 'रूपके त्वनुरक्तैव कार्या प्रहसनेतरे' इति पाठान्तरम्।

अथ प्रगल्भा—

**यौवनान्धा स्मरोन्मत्ता प्रगल्भा दयिताङ्कके ।**
**विलीयमानेवानन्दाद्रतारम्भेऽप्यचेतना ॥ १८ ॥**

गाढयौवना यथा ममैव—

' अभ्युन्नतस्तनमुरो नयने च दीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि ।
मध्योऽधिकं तनुरलीवगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः ॥ '

यथा च—

" स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् ।
विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥ "

भावप्रगल्भा यथा—

" न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि किं यान्ति नेत्रतामुत कर्णताम् ॥ "

रतप्रगल्भा यथा—

" कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासः प्रश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं नु किं कथमिति स्वल्पापि मे न स्मृतिः ॥ "

एवमन्येऽपि परित्यक्तह्रीयन्त्रणा वैदग्ध्यप्रायाः प्रगल्भाव्यवहारा वेदितव्याः यथा—

" क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥ "

अथास्याः कोपचेष्टा—

**सावहित्थादरोदास्ते रतौ, धीरेतरा क्रुधा— ।**
**संतर्ज्य ताडयेत्, मध्या मध्याधीरेव तं वदेत् ॥ १९ ॥**

सेति–सावहित्थादरा रतावुदासीना चेति भेदद्वय धीरप्रगल्भायाः ।
धीरेतरा=अधीरप्रगल्भा । मध्या=धीराधीरप्रगल्भा ।

सहावहित्थेन-आकारसंवरणेनादरेणच-उपचाराधिक्येन वर्तते सा सावहित्थादरा, रतावुदासीना क्रुधा-कोपेन भवति ।

सावहित्थादरा यथाऽमरुशतके—

"एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलाहरणच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥"

रतावुदासीना यथा—

" आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो
भग्नभ्रूगतिखण्ड्यमानमधरं धत्ते न केशग्रहे ।
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष संप्रति कुतः कोपप्रकारोऽपरः ॥ "

इतरा त्वधीरप्रगल्भा कुपिता सती संतर्ज्य ताडयति यथामरुशतके—

" कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः ।
भूयोऽप्येवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एष निह्नुतिपरः प्रेयान्रुदन्त्या हसन् ॥ "

धीराधीरप्रगल्भा मध्याधीरेव तं वदति सोत्प्रासवक्रोक्त्या यथा तत्रैव—

" कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ "

पुनश्च—

द्वेधा ज्येष्ठा कनिष्ठा चेत्यमुग्धा द्वादशोदिताः ।

मध्याप्रगल्भाभेदानां प्रत्येकं ज्येष्ठाकनिष्ठात्वभेदेन द्वादश भेदा भवन्ति, मुग्धा त्वेकरूपैव, ज्येष्ठाकनिष्ठे यथाऽमरुशतके—

---

अधीरप्रगल्भामाह—इतरेति । ताडयतीत्यत्र प्रियमिति शेषः ।

तम्—नायकम् ॥ १९ ॥

अमुग्धेतिपदं मुग्धातिरिक्तयोर्मध्याप्रगल्भयोर्ग्राहकम् ।

न्तसेना चारुदत्तस्य। प्रहसने त्वरक्तापि हास्यहेतुत्वात्। नाटकादौ तु दिव्यनृपनायके नैव विधेया।

अथ भेदान्तराणि—

आसामष्टावऽवस्थाः स्युः स्वाधीनपतिकादिकाः ॥ २३ ॥

स्वाधीनपतिका वासकसज्जा विरहोत्कण्ठिता खण्डिता कलहान्तरिता विप्रलब्धा प्रोषितप्रिया अभिसारिकेत्यष्टौ स्वस्त्रीप्रमृतीनामवस्थाः। नायिकाप्रभृतीनामप्यवस्थारूपत्वे सत्यऽवस्थान्तराभिधानं पूर्वासां धर्मित्वप्रतिपादनाय। अष्टाविति न्यूनाधिकव्यवच्छेदः।

न च वासकसज्जादेः स्वाधीनपतिकादावन्तर्भावः, अनासन्नप्रियत्वाद्वासकसज्जाया न स्वाधीनपतिकात्वम्। यदिचैष्यत्प्रियापि स्वाधीनपतिका प्रोषितप्रियापि न पृथग्वाच्या, न चेयता व्यवधानेनासत्तिरिति नियन्तुं शक्यम्। न चाविदितप्रियव्यलीकायाः खण्डितात्वम्। नापि

---

नैव विधेया=नैव कर्तव्येत्यर्थः। पाठान्तरे प्रहसनेतरे=प्रहसनातिरिक्ते रूपकेऽनुरक्तैव वेश्या नायिका विधेया न त्वनुरागरहितेत्यर्थः।

एतावत्पर्यन्तमुक्तानां सर्वासामपि नायिकानामष्टौ भेदानाह—आसामिति।

नायिकाप्रभृतीनामिति—नायिकात्वमप्यवस्थैवेति तादृशनायिकात्वावस्थाक्रान्तानां यत् स्वाधीनपतिकात्वाद्यवस्थान्तराभिधानं तत् पूर्वोक्तषोडशविधनायिकानां धर्मित्वप्रतिपादनार्थमित्यर्थः। उक्तावस्थाक्रान्तानामेता अवस्था भवन्तीतियावत्।

न चेति—अनासन्नप्रिया हि वासकसज्जा भवति आसन्नप्रिया च स्वाधीनपतिकेति परस्परं भेदान्न वासकसज्जादेः स्वाधीनपतिकादावन्तर्भाव इत्यर्थः। यस्या प्रियोऽल्पेनैव कालेनागमिष्यति सैष्यत्पतिका यथा वासकसज्जादिः। सा यदि स्वाधीनपतिका स्यात् तदा प्रोषितप्रियापि स्वाधीनपतिकैव स्यात् पृथक् न स्यात् तत्प्रियस्याप्यागमिष्यमाणत्वादित्याह—यदि चेति। ननु प्रोषितप्रियायास्तत्प्रियस्य च मध्येऽधिकदेशव्यवधानमस्तीति न प्रोषितप्रिया स्वाधीनपतिका भवितुमर्हति वासकसज्जादेरेष्यत्प्रियायास्तत्प्रियस्य च मध्ये तादृशाधिकदेशव्यवधानं नास्तीति वासकसज्जादेः स्वाधीनपतिकायामन्तर्भावः समवतीत्याशङ्क्याह—न चेयतेति। न चाऽविदितप्रियव्यलीकायाः खण्डितात्वं भवति किं तु विदितप्रियव्यलीकाया एवेत्याह—न चेति। व्यलीकम्=अकार्यं परनायिकासमागमः। अन्यकामुकेन सह कामक्रीडारताया सुरतभोगेच्छाक्रान्ताया वा प्रोषितपतिकात्वं न भवति किं तु

प्रवृत्तरतिभोगेच्छाया प्रोषितप्रियात्वम् । स्वयमगमनान्नायक प्रत्यप्रयोजकत्वान्नाभिसारिकात्वम् । एवमुत्कण्ठिताप्यन्यैव पूर्वाभ्य । औचित्यप्राप्तप्रियागमनसमयातिवृत्तिविधुरा न वासकसज्जा । तथा विप्रलब्धापि वासकसज्जावदन्यैव पूर्वाभ्य,—उक्त्वा नायात इति प्रतारणाधिक्याच्च वासकसज्जोत्कण्ठितयो पृथक् । कलहान्तरिता तु यद्यपि विदितव्यलीका तथाप्यगृहीतप्रियानुनया पश्चात्तापप्रकाशितप्रसादा पृथगेव खण्डिताया । तन् स्थितमेतदष्टावऽवस्था इति ।

तत्र—

आसन्नायत्तरमणा हृष्टा स्वाधीनभर्तृका ।

यथा—

"मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशाना
वैरी न चेद्भवति वेपथुरन्तराय ॥"

स्वपतिविरहाकुलाया एवेत्याह–नापीति । नायक प्रति स्वयमगमने तस्या नापि कायामभिसारिकात्वप्रयोजकधर्माभावात्तस्या अभिसारिकात्वं न भवति किं तु नायक प्रति स्वयं गमने एवेत्याह स्वयमिति । किंवा नायक प्रति स्वयमगमने नायकस्य चाऽनाह्वानेऽभिसारिकात्व न भवति किं तु नायकं प्रति गमनेन वा नायकस्याह्वानेन चाभिसारिकात्व भवति स्वयमभिसरति नायकमभिसारयति वेत्य भिसारिकेत्यर्थ । औचित्यप्राप्त यत् प्रियागमन तत्समयस्यातिवृत्त्या=अतिक्रम णेन या विधुरा–व्याकुला भवति सा वासकसज्जा न भवति किं तूत्कै वेत्याह– औचित्येति । 'सकेतस्थले आगमिष्यामि' इत्युक्त्वापि यदि प्रियो नाऽऽयाति सकेतस्थले तदा प्रतारणाधिक्यात् सा विप्रलब्धा भवति नैव प्रतारणा वासकसज्जोत्कण्ठितयोर्भवति ते प्रति 'आगमिष्यामि' इत्युक्तत्वाभावा दिति वासकसज्जोत्कण्ठितयो पृथगेव विप्रलब्धेत्याह–तथेति । खण्डिताकलहान्त रितयोर्भेदमाह–कलहान्तरितेति । न गृहीत प्रियस्यानुनयो यया सा अगृहीत प्रियानुनया, प्रियविधूननविषयकपश्चात्तापेन प्रकाशित स्वकीयप्रसादो यया सा पश्चात्तापप्रकाशितप्रसादा । प्रकृतप्रतिपादनमुपसहरति–तदिति, तत् नामोक्तभे दानां क्वचिदन्तर्भावाभावात् ॥ २३ ॥

आसन्न–समीपस्थ आयत्त–स्वाधीनश्च रमणो यस्या साऽऽसन्नायत्तरमणा ।

यथा वासकसज्जा—

**मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये ॥ २४ ॥**

स्वमात्मानं वेश्म च हर्षेण भूषयत्येष्यति प्रिये वासकसज्जा यथा—

"निजपाणिपल्लवतटस्खलनादभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्यकमलश्वसनैः ॥"

अथ विरहोत्कण्ठिता—

**चिरयत्यव्यलीके तु विरहोत्कण्ठितोन्मनाः[1] ।**

यथा—

"सखि स विजितो वीणावाद्यैः कयाप्यपरस्त्रिया
पणितमभवत्ताभ्यां तत्र क्षपाललितं ध्रुवम् ।
कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि
प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते ॥"

अथ खण्डिता—

**ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता ॥ २५ ॥**

यथा—

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥"

अथ कलहान्तरिता—

**कलहान्तरिताऽमर्षाद्विधूतेऽनुशयार्तियुक् ।**

" एष्यति " इति सति सप्तमी, अत्र ' या सा ' इति शेषः ॥ २४ ॥

अव्यलीके=निरपराधे प्रिये चिरयति सति निरपराधोऽपि सन् यदि प्रियो नायाति तदा विरहोत्कण्ठितेत्युच्यते । उन्मना =उत्कण्ठितचित्ता । प्रिये सव्यलीके तु चिरयति कलहान्तरिता स्यादिति व्यतिरेको विशेषणसार्थक्य च ।

ज्ञातेति–अन्यनायिकाया. सभोगेन विकृते नायके ज्ञाते सतीर्ष्यया या कषायिता सा खण्डिता ॥ २५ ॥

कलहेति–अन्यनायिकासंभोगविषयकज्ञानजन्याद् अमर्षात्=क्रोधात् प्रिये

1 ' विरहोत्कण्ठिता मता" इति पाठान्तरम् ।

यथा—

"निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिवं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥"

अथ विप्रलब्धा—

**विप्रलब्धोक्तसमयमप्राप्तेऽतिविमानिता ॥ २६ ॥**

यथा—

"उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः ।
याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः ॥"

अथ प्रोषितप्रिया—

**दूरदेशान्तरस्थे तु कार्यतः प्रोषितप्रिया ।**

यथाऽमरुशतके—

"आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति ।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन्क्षणे
माभूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥"

अथाभिसारिका—

**कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका ॥ २७ ॥**

यथाऽमरुशतके—

"उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥" .

निधूते–तिरस्कृते सति तदनन्तरं या ताडनातिरस्कारकरणाद् अनुशयेन–पश्चात्तापेन तु खिन्ना भवति सा कलहान्तरिता ।

विप्रेति–सङ्केतस्थले संकेतितसमये प्रियेऽप्राप्ते सत्यपमानं प्राप्ता विप्रलब्धा ॥ २६

दूरेति–प्रिये कार्यवशेन दूरदेशस्थे सति प्रोषितप्रिया ।

कामेति–या कामार्ता सती स्वयमभिसरति कान्तं वाभिसारयति साऽभिसारिका ॥ २७ ॥

यथा च—

"न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमुपगम्य वदेरभिदूति काचिदिति संदिदिशे ॥"

तत्र—

चिन्तानिःश्वासखेदाश्रुवैवर्ण्यग्लान्यभूषणैः ।
युक्ताः षडन्त्या द्वे चाद्ये क्रीडौज्ज्वल्यप्रहर्षितैः ॥ २८ ॥

परस्त्रियौ तु कन्यकोढे संकेतात्पूर्वं विरहोत्कण्ठिते पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके कुतोऽपि संकेतस्थानमप्राप्ते नायके विप्रलब्धे इति व्यवस्था व्यवस्थितैवाऽनयोरिति—अस्वाधीनप्रिययोरवस्थान्तरायोगात् ।

यत्तु मालविकाग्निमित्रादौ "योऽप्येवं धीरः सोऽपि दृष्टो देव्याः पुरतः" इति मालविकावचनानन्तरम् "राजा—

दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥"

इत्यादि, तन्न खण्डितानुनयाभिप्रायेण अपि तु सर्वथा मम देव्यधीनत्वमाशङ्क्य निराशा मा भूदिति कन्याविश्रम्भणायेति ।

तथाऽनुपसंजातनायकसमागमाया देशान्तरव्यवधानेऽप्युत्कण्ठितात्वमेवेति न प्रोषितप्रियात्वम्—अनायत्तप्रियत्वादेवेति ।

---

चिन्तेति—भूषणपदमत्र शोभादिपरं विज्ञेयम्—अभिसारिकादीनामलङ्कारयुक्तत्वसंभवात् तथा चाऽभूषणयुक्ता नाम शोभादिरहिता दीना इति यावत् । अन्त्याः षट् विरहोत्कण्ठितादयः । आद्ये द्वे स्वाधीनभर्तृका वासकसज्जा च ।

कन्यकापरोढयोस्तु विरहोत्कण्ठिताभिसारिकाविप्रलब्धेत्यवस्थात्रयमेव भवतीत्याह—परस्त्रियावित्यादिना । अनयोः=कन्यकोढयोः । उक्तव्यवस्थायां हेतुमाह—अस्वाधीनेति ।

ननु मालविकापि कन्यैव तया च राजा देव्याः समीपे दृष्ट इति सा खण्डिता जाता अत एव तस्या मालविकाया राज्ञा "दाक्षिण्यं नाम" इत्यादिनाऽनुनयोऽपि कृत इति कथं कन्यकापरोढयोरुक्तावस्थात्रयनियम इत्याशङ्क्ते—यत्त्विति । उत्तरमाह—तदिति । स्पष्टमन्यत् ॥ २८ ॥

विशेषान्तरमाह—तथेति । अनायत्तप्रियत्वात्=अस्वाधीनप्रियत्वात् ।

अथासां सहायिन्य —

दूत्यो दासी सखी कारूर्धात्रेयी प्रतिवेशिका ।
लिङ्गिनी शिल्पिनी स्वं च नेतृमित्रगुणान्विताः ॥ २९ ॥

दासी परिचारिका। सखी=स्नेहनिबद्धा। कारु=रजकीप्रभृति। धात्रेयी=उपमातृसुता। प्रतिवेशिका-प्रतिगृहिणी। लिङ्गिनी=भिक्षुक्यादिका। शिल्पिनी=चित्रकारादिस्त्री। स्वयं चेति दूतीविशेषा नायकमित्राणां पीठमर्दादीनां निसृष्टार्थत्वादिना गुणेन युक्ता, तथा च मालतीमाधवे कामन्दकीं प्रति—

"शास्त्रेषु निष्ठा सहजश्च बोध: प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोध: प्रतिभानवत्त्वमेते गुणा: कामदुघा: क्रियासु ॥"

तत्र सखी यथा—

"मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते
दहनपतिता दृष्टा मूर्तिर्मया नहि वैधवी ।
इति तु विदितं नारीरूपः स लोकदृशां सुधा
तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥"

यथा च—

"सच्चं जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ ।
मरउ ण तुमं भणिस्सं मरणं पि सलाहणिज्जं से ॥"

---

आसाम्-उक्तनायिकानाम् ।

निसृष्टार्थत्वादिनेति-प्रेषकाभिप्रायं ज्ञात्वा यं प्रतिवक्तव्यं तत्समीपे गत्वा यत् स्वयं तदुक्तवचनानामुत्तरप्रदानं तद् निसृष्टार्थत्वं गुण: उक्तं च—

"निसृष्टार्थो मितार्थश्च तथा सन्देशहारक: ।
कार्यप्रेष्यास्त्रिधा दूतो दूत्यश्चापि तथा त्रिधा ॥"

"उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कर्म निसृष्टार्थस्तु स स्मृत: ॥"

"धीर: स्थिरमति: शूर: स्वामिकार्यविधायक: ।
स्वदोषप्रकाशी च निसृष्टार्थ: स उच्यते ॥" इत्यादि ।

---

१ "सत्यं जानाति द्रष्टुं सदृशे जने युज्यते राग: ।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयमस्या: ॥" इति छाया ।

स्वयं दूती यथा—

"मेहु एहि किं णिवालअ हरसि णिअं वाउ जइ वि मे सिचअम् ।
साहेमि कस्स सुन्दर दूरे गामो अहं एक्का"

इत्याद्यूह्यम् ।

अथ योषिदलङ्काराः—

**यौवने सत्त्वजाः स्त्रीणामलङ्कारास्तु विंशतिः ।**

यौवने सत्त्वोद्भूता विंशतिरलङ्काराः स्त्रीणां भवन्ति ।

तत्र—

**भावो हावश्च हेला च त्रयस्तत्र शरीरजाः ॥ ३० ॥**
**शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।**
**औदार्यं धैर्यमित्येते सप्त भावा अयत्नजाः ॥ ३१ ॥**

तत्र भावहावहेलास्त्रयोऽङ्गजाः, शोभा कान्तिर्दीप्तिर्माधुर्यं प्रागल्भ्यमौदार्यं धैर्यमित्ययत्नजाः सप्त ।

**लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।**
**मोट्टायितं कुट्टमितं विब्बोको ललितं तथा ॥ ३२ ॥**
**विहृतं चेति विज्ञेया दश भावाः स्वभावजाः ।**

तानेव निर्दिशति—

**निर्विकारात्मकात्सत्त्वाद्भावस्तत्राद्यविक्रिया ॥ ३३ ॥**

तत्र विकारहेतौ सत्यप्यविकारं सत्त्वं यथा कुमारसंभवे—

" श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥"

तस्मादविकाररूपात्सत्त्वाद् यः प्रथमो विकारोऽन्तर्विपरिवर्ती बीजस्योच्छूनतेव स भावः । यथा—

---

तत्र=मनसि । अविकारम्=विकार कामाद्यावेशभ्रमासं मनः सत्त्वमित्युच्यते तदुक्तम्—" रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते " इति श्रुताप्सरोगीतिः " इति सत्त्वमात्रस्योदाहरणम् ।

बीजस्येति—बीजस्य मृत्सलिलसंयोगेनाङ्कुरोत्पत्तेः पूर्वं यः स्थौल्यादिलक्षणो

---

१ " मुहुरेहि किं निवारक हरसि निज वायो यद्यपि मे सिचयम् ।
साधयामि कस्य सुन्दर दूरे ग्रामोऽहमेका ॥ " इति च्छाया ।

" दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥ "

यथा वा कुमारसंभवे—

" हरस्तु किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥"

यथा वा ममैव—

'तं[1] चिअ वअणं ते चेअ लोअणे जोव्वणं पि तं चेअ ।
अण्णा अणङ्गलच्छी अण्णं चिअ किं पि साहेइ ॥'

अथ हावः—

अल्पालापः सशृङ्गारो हावोऽक्षिभ्रूविकारकृत् ।

प्रतिनियताङ्गविकारकारी शृङ्गारः स्वभावविशेषो हावः यथा ममैव—

'जं[2] किं पि पेच्छमाणं भणमाणं रे जहातहच्चेअ ।
णिज्झाअ णेहमुद्धं वअस्स मुद्धं णिअच्छेहि ॥'

अथ हेला—

स एव हेला सुव्यक्तशृङ्गाररससूचिका ॥ ३४ ॥

हाव एव स्पष्टभूयोविकारत्वात्सुव्यक्तशृङ्गाररससूचको हेला यथा ममैव—

---

विकारः स उच्छूनतापदेन बोध्यत्वादनोऽत्यूनतावस्थायां बीजस्यान्त एव वि-
विकारो भवति न बहिरिति तादृश एव भावपदार्थो विशेषः ॥ ३३ ॥

अक्षिभ्रूविकारकारी सशृङ्गारः-शृङ्गाररसहितोऽल्पालापो हाव इत्यर्थः । अत्र " अल्पालापः " इत्यत्र " हेवाकिन " इत्यपि पाठान्तरम् प्रतिनियताङ्गविकारो हेवाकस्तद्वान् हेवाकी तस्येत्यर्थः । प्रतिनियतमङ्गविकारं करोति प्रतिनियतेष्वङ्गेषु विकारं करोतीति वा प्रतिनियताङ्गविकारकारी न तु सकलाङ्गविकारकारीत्यर्थः, यथात्र अक्ष्यादिषु विकार उक्तः । भावादेवायमिमाऽवस्था हाव इतिभावः ।

---

1 " तदेव वचनं ते चैव लोचने यौवनमपि तदेव ।
अन्यानङ्गलक्ष्मीरन्यदेव किमपि साधयति ॥ " इति च्छाया ।

2 " यत्किमपि प्रेक्षमाणा भणमानां रे यथातथैव ।
निर्ध्याय स्नेहमुग्धां वयस्य मुग्धां पश्य ॥" इति च्छाया ।

'तह झत्ति से पअत्ता सव्वङ्गं विब्भमा थणुब्भेए।
संसइअबालभावा होइ चिरं जह सहीणं पि ॥'

अथायत्नजाः सप्त तत्र शोभा—

**रूपोपभोगतारुण्यैः शोभाङ्गानां विभूषणम् ।**

यथा कुमारसंभवे—

"तां प्राङ्मुखीं तत्र निवेश्य बालां क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥"

इत्यादि। यथा च शाकुन्तले—

"अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥"

अथ कान्तिः—

**मन्मथावापितच्छाया सैव कान्तिरिति स्मृता ॥ ३५ ॥**

शोभैव रागावतारघनीकृता कान्तिः यथा—

"उन्मील्द्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं
भिन्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् ।
एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुका-
दप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥"

यथा हि महाश्वेतावर्णनावसरे भट्टबाणस्य ।

अथ माधुर्यम्—

**अनुल्बणत्वं माधुर्यम्,**

मन्मथेति–मन्मथेनाऽऽवापिता=घनीकृता छाया=कान्तिर्यस्यां तादृशी शोभैव कान्तिरित्युच्यते । "मन्मथाप्यायित च्छाया" इतिपाठे तु मन्मथेन=कामविकारेणाऽप्यायिता युक्ता छाया=कान्तिर्यस्यामित्यर्थः ॥ ३५ ॥

अनुल्बणत्वम्=रमणीयता । उक्तं च "सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ।" इति ।

---

१ "तथा झटित्यस्याः प्रवृत्ताः सर्वाङ्गं विभ्रमाः स्तनोद्भेदे ।
संशयितबालभावा भवति चिरं यथा सखीनामपि ॥" इति च्छाया ।

२ "मन्मथाप्यायित" इति पाठान्तरम् ।

यथा शाकुन्तले—

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥"

अथ दीप्तिः—

दीप्तिः कान्तेस्तु विस्तरः ।

यथा—

"देआ पसिअ णिअत्तसु मुहससिजोण्हाविलुत्ततमणिवहे ।
अहिसारिआण विग्घं करोसि अण्णाण णिहआसे ॥"[1]

अथ प्रागल्भ्यम्—

निःसाध्वसत्वं प्रागल्भ्यम्,

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यं यथा ममैव—

'तथा व्रीडाविधेयापि तथा मुग्धापि सुन्दरी ।
कलाप्रयोगचातुर्ये सभास्वाचार्यकं गता ॥'

अथौदार्यम्—

औदार्यं प्रश्रयः सदा ॥ ३६ ॥

यथा—

"दिअहं खु दुक्खिआए सअलं काऊण गेहवावारम् ।[2]

"दीप्तिः कान्तेस्तु विस्तरः" इत्यत्र 'दीप्तिः कान्तेस्तु विस्तृतिः' इत्येव वक्तव्यं विस्तरशब्दस्य शब्दविस्तृतिपरत्वात् तदुक्तम्—"विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः" इति ।

अङ्गसादः=अङ्गस्य मुखादेः सादः=अवसादः म्लानता । निर्गतं साध्वसं यस्मात् स निस्साध्वसस्तस्य भावो निस्साध्वसत्वं तदेव प्रागल्भ्यम् । उदाहरणं तु न समवेतार्थमित्यन्यत्र द्रष्टव्यम् ।

प्रश्रयः=प्रेम आनुकूल्यमिति यावत् ॥ ३६ ॥

---

१ "देवात्त्वा नितान्तमुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासां विहताशे ॥" इति च्छाया ।

२ "दिवसं खलु दुःखितायाः सकलं कृत्वा गृहव्यापारम् ।

गरुएवि मण्णुदुक्खे भरिमो पाअन्तसुत्तस्स ॥"

यथा वा—" भ्रूभङ्गे सहसोद्गता " इत्यादि ।

अथ धैर्यम्—

**चापलाऽविहता धैर्यं चिद्वृत्तिरविकत्थना ।**

चापलानुपहता मनोवृत्तिरात्मगुणानामऽनाख्यायिका धैर्यमिति यथा मालतीमाधवे—

" ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यऽमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥"

अथ स्वाभाविका दश तत्र—

**प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः ॥ ३७ ॥**

प्रियकृतानां वाग्वेषचेष्टानां शृङ्गारिणीनामङ्गनाभिरनुकरणं लीला यथा ममैव—

' तेह दिट्ठं तह भणिअं ताए णिअदं तहा तहासीणम् ।
अवलोइअं सइण्हं सविब्भमं जह सवत्तीहिं ॥ '

यथा वा—" तेनोदितं वदति याति तथा यथासौ " इत्यादि ।

अथ विलासः—

**तात्कालिको विशेषस्तु विलासोऽङ्गक्रियोक्तिषु ।**

दयितावलोकनादिकालेऽङ्गे क्रियायां वचने च सातिशयविशेषोत्पत्तिर्विलासः यथा मालतीमाधवे—

---

चापल्येन=चाञ्चल्येन विहता न भवतीति चापलाऽविहता । चापलानुपहता=चाञ्चल्येन रहिता गम्भीरेति यावत् । अनाख्यायिका=स्वयं वर्णनाऽननुकूला ।

मधुरैर्मनोहरैरङ्गविचेष्टितैः प्रियानुकरणं लीला ॥ ३७ ॥

तात्कालिकः=दयितावलोकनादिकालिकः ।

---

गुरुण्यपि मन्युदुःखे भरिमा पादान्ते शुभस्य ॥" इति छाया ।

१ " तथा दृष्टं तथा भणितं तया नियतं तथा तथासीनम् ।
अवलोकितं सतृष्णं सविभ्रमं यथा सपत्नीभिः ॥ " इति छाया ।

" अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारविशेषरम्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥ "

अथ विच्छित्तिः—

**आकल्परचनाऽल्पापि विच्छित्तिः कान्तिपोषकृत् ॥ ३८ ॥**

स्तोकोऽपि वेषो बहुतरकमनीयताकारी विच्छित्तिः यथा कुमारसंभवे—

"कर्णार्पितो रोध्रकषायरूक्षे गोरोचनाभेदनितान्तगौरे ।
तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥ "

अथ विभ्रमः—

**विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ।**

यथा—

" अभ्युद्गते शशिनि पेशलकान्तदूती-
संलापसंवलितलोचनमानसाभिः ।
अग्राहि मण्डनविधिर्विपरीतभूषा-
विन्यासहासितसखीजनमङ्गनाभिः ॥"

यथा वा ममैव—

' श्रुत्वायातं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥ '

अथ किलकिञ्चितम्—

**क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम् ॥ ३९ ॥**

यथा ममैव—

' रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे ।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित-
स्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम् ॥'

---

आकल्परचना—वेशरचना ॥ ३८ ॥
भूषास्थानविपर्यय इति—अन्यत्रारोपणीयस्यान्यत्रारोपः स्थानविपर्ययः॥३९॥

अथ मोट्टायितम्—

**मोट्टायितं तु तद्भावभावनेष्टकथादिषु ।**

इष्टकथादिषु प्रियतमकथानुकरणादिषु प्रियानुरागेण भावितान्तःकरणत्वं मोट्टायितं यथा पद्मगुप्तस्य—

" चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि ।
व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा ॥ "

यथा वा—

" मातः कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहु-
र्जृम्भामन्थरतारकां सुललितापाङ्गां दधाना दृशम् ।
सुप्तेवालिखितेव शून्यहृदया लेखावशेषीभव-
स्यात्मद्रोहिणि किं ह्रिया कथय मे गूढो निहन्ति स्मरः ॥"

यथा वा ममैव—

' स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
भवति विततपृष्ठोदस्तपीनस्तनाग्रा
ततवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥ '

अथ कुट्टमितम्—

**सानन्दान्तः कुट्टमितं कुप्येत्केशाधरग्रहे ॥ ४० ॥**

यथा—

" नान्दीपदानि रतिनाटकविभ्रमाणा-
माद्याक्षराणि परमाण्यथवा स्मरस्य ।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेः
सीत्कारशुष्करुदितानि जयन्ति नार्याः ॥ "

अथ बिब्बोकः—

**गर्वाभिमानादिष्टेऽपि बिब्बोकोऽनादरक्रिया ।**

---

तद्भावेन भावना तद्भावभावना प्रियतमैकतानतेत्यर्थः । इष्टकथादिषु=प्रियकथादिषु ।

केशाधरग्रहे कृते यः सानन्दान्तःकरणाया अपि कोपः स कुट्टमितम् । सानन्दान्त इति क्रियाविशेषणम् ॥ ४० ॥

" गर्वाभिमानात् " इत्यत्र ' रूपाभिमानात् ' इति युक्तं स्यात् । किं वा

यथा ममैव—

' सव्याजं तिलकालकान्विरलयंल्लोलाङ्गुलिः संस्पृशन्
वारंवारमुदञ्चयन्कुचयुगप्रोदञ्चिनीलाञ्चलम् ।
यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितं
तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः ॥"

अथ ललितम्—

**सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत् ॥ ४१ ॥**

यथा ममैव—

' सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरयातै-
र्निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥'

अथ विहृतम्—

**प्राप्तकालं न यद् ब्रूयाद्व्रीडया विहृतं हि तत् ।**

प्राप्तावसरस्यापि वाक्यस्य लज्जया यदवचनं तद्विहृतं यथा—

" पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किंचित्स्थितमपि हृदये मानसं तद्दुनोति ॥"

अथ नेतुः कार्यान्तरसहायानाह—

**मन्त्री स्वं वोभयं वापि सखा तस्यार्थचिन्तने ॥ ४२ ॥**

तस्य नेतुरर्थचिन्तायां तन्त्रावापादिलक्षणायां मन्त्री वाऽऽत्मा वोभयं वा सहायः ।

तत्र विभागमाह—

**मन्त्रिणा ललितः, शेषा मन्त्रिस्वायत्तसिद्धयः ।**

रूपादेर्गर्वं यौवनादेश्चाभिमानस्ताभ्याम् ।

सुकुमारो मसृणः स्निग्धश्चाङ्गविन्यासो ललितम् ॥ ४१ ॥

तन्त्रेति–स्वराज्ये क्रियमाणं कर्म तन्त्रम्, परराज्ये क्रियमाणं गूढचारप्रेषणादिलक्षणं कर्माऽऽवापः, आदिना शत्रुनिग्रहादयो ग्राह्याः ॥ ४२ ॥

उक्तलक्षणो ललितो नेता मन्त्र्यायत्तसिद्धिः । शेषा धीरोदात्तादयः अनियमेन मन्त्रिणा स्वेन वोभयेन वाङ्गीकृतसिद्धय इति ।

धर्मसहायास्तु—

ऋत्विक्पुरोहितौ धर्मे तपस्विब्रह्मवादिनः ॥ ४३ ॥

ब्रह्म=वेदस्तं वदन्ति व्याचक्षते वा तच्छीला ब्रह्मवादिनः आत्मज्ञानिनो वा, शेषाः प्रतीताः ।

दुष्टदमनं दण्डः तत्सहायास्तु—

सुहृत्कुमाराटविका दण्डे सामन्तसैनिकाः ।

स्पष्टम् । एवं तत्तत्कार्यान्तरेषु सहायान्तराणि योज्यानि, यदाह—

अन्तःपुरे वर्षवराः किराता मूकवामनाः ॥ ४४ ॥

म्लेच्छाभीरशकाराद्याः स्वस्वकार्योपयोगिनः ।

शकारो राज्ञः श्यालो हीनजातिः ।

विशेषान्तरमाह—

ज्येष्ठमध्याधमत्वेन सर्वेषां च त्रिरूपता ॥ ४५ ॥

तारतम्याद्यथोक्तानां गुणानां चोत्तमादिता ।

एवं प्रागुक्तानां नायकनायिकादूतदूतीमन्त्रिपुरोहितादीनामुत्तममध्यमाधमभावेन त्रिरूपता, उत्तमादिभावश्च न गुणसंख्योपचयापचयेन किं तर्हि ? गुणातिशयतारतम्येन ।

एवं नाट्ये विधातव्यो नायकः सपरिच्छदः[1] ॥ ४६ ॥

उक्तो नायकः, तद्व्यापारस्तूच्यते—

तद्व्यापारात्मिका वृत्तिश्चतुर्धा, तत्र कैशिकी ।

गीतनृत्यविलासाद्यैर्मृदुः शृङ्गारचेष्टितैः ॥ ४७ ॥

प्रवृत्तिरूपो नेतृव्यापारस्वभावो वृत्तिः सा च कैशिकी-सात्त्वती-आर-

---

कुमारः=युवराजः । अटव्यां भव आटविकः=अरण्यनिवासी नरः ।
वर्षवराः=षण्ढाः ॥ ४४ ॥
नेतृव्यापारस्वभावः=नायकस्य व्यापारानुकूलः स्वभावो वृत्तिः ।

---

१ "सपरिग्रहः" इत्यपि पाठः ।

भर्ती-भारतीभेदाश्चतुर्विधा, तासां गीतनृत्यविलासकामोपभोगाद्युपलक्ष्यमाणो मृदुः शृङ्गारी कामफलावच्छिन्नो व्यापारः कैशिकी सा तु—

नर्मतत्स्फिञ्जतत्स्फोटतद्गर्भैश्चतुरङ्गिका ।

तदित्यनेन सर्वत्र नर्म परामृश्यते ।

तत्र—

वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम् ॥ ४८ ॥
हास्येनैव सशृङ्गारभयेन विहितं त्रिधा ।
आत्मोपक्षेपसंभोगमानैः शृङ्गार्यपि त्रिधा ॥ ४९ ॥
शुद्धमङ्गं भयं द्वेधा त्रेधा वाग्वेषचेष्टितैः ।
सर्वं सहास्यमित्येवं नर्माष्टादशधोदितम् ॥ ५० ॥

अग्राम्य इष्टजनावर्जनरूपः परिहासो नर्म तच्च शुद्धहास्येन सशृङ्गारहास्येन सभयहास्येन च रचितं त्रिविधम्, शृङ्गारवदपि स्वानुरागनिवेदन-संभोगेच्छाप्रकाशन-सापराधप्रियप्रतिभेदनैस्त्रिविधमेव, भयनर्मापि शुद्धरसान्तराङ्गभावाद्द्विविधम्, एवं षड्विधस्य प्रत्येकं वाग्वेषचेष्टाव्यतिकरेणाष्टादशविधत्वम् ।

---

तासामिति—तासां चतुर्विधवृत्तीनां मध्ये इत्यर्थः ॥ ४७ ॥

सा=कैशिकी ।

सर्वेति—तथा च १ नर्म २ नर्मस्फिञ्ज ३ नर्मस्फोटः ४ नर्मगर्भः इति कैशिक्या अङ्गानि ।

प्रियेति—प्रियाया उपच्छन्दनम्=चित्तविनोदकारी व्यापारस्तदात्मकं यद् वैदग्ध्येन क्रीडितं तत् नर्म, तस्य च नर्मणो हास्येनैव=केवलहास्येन जायमानत्वे १ एको भेदः, सशृङ्गारहास्येन=शृङ्गारहास्याभ्यां जायमानत्वे ३ त्रयो भेदा भवन्ति—तत्र आत्मोपक्षेपेण=स्वानुरागनिवेदनेनैकः, संभोगेन=संभोगेच्छाप्रकाशनेन द्वितीयः, मानेन=सापराधप्रियप्रतिभेदनेन=सापराधप्रियकृतमानापनोदनेन च तृतीयो भेद इति शृङ्गारि=शृङ्गारसहितं नर्म त्रिधा । भयं च क्वचिच्छुद्धं क्वचिदङ्गभूतमिति भयनर्मापि=सभयहास्येन जायमानमपि नर्म शुद्धत्वात्=भयस्य प्रधानत्वात् भयस्य रसान्तरेऽङ्गभावाच्च द्विविधमिति २ द्वौ भेदौ, एते च मिलित्वा भेदाः षट् सख्याकाः जाताः । तत्रापि वाग्वेषचेष्टितैः=वचनेन वेषेण चेष्टया च जायमानत्वात् षड्भेदानां त्रैविध्येन सहास्यं सर्वं नर्म अष्टादशविधं जातमित्यन्वयः ॥ ४८–५० ॥

तत्र वचोहास्यनर्म यथा—

"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥"

वेषनर्म यथा नागानन्दे विदूषकशेखरकव्यतिकरे । क्रियानर्म यथा मालविकाग्निमित्र उत्स्वप्रायमानस्य विदूषकस्योपरि निपुणिका सर्पभ्रमकारणं दण्डकाष्ठं पातयति । एवं वक्ष्यमाणेष्वपि वाग्वेषचेष्टापरत्वमुदाहार्यम् ।

शृङ्गारवदात्मोपक्षेपनर्म यथा—

"मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां
मा शून्येति विमुञ्च पान्थ विवशः शीतः प्रपामण्डपः ।
तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसी
त्वच्चित्तं तु न रञ्जयन्ति पथिक प्रायः प्रपापालिकाः ॥"

संभोगनर्म यथा—

"सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण ।
णेच्छन्तस्स वि पाए धुअइ हसन्ती हसन्तस्स ॥"[१]

माननर्म यथा—

"तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥"

भयनर्म यथा रत्नावल्यामालेख्यदर्शनावसरे—"सुसंगता—जाणिदो मए एसो सव्वो वुत्तन्तो समं चित्तफलहएण ता देवीए णिवेदइस्सम् ।"[२] इत्यादि ।

शृङ्गाराङ्गं भयनर्म यथा ममैव—

'अभिव्यक्तालीकः सकलविफलोपायविभव-
श्चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम् ।

---

१ "सालोके एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा ।
अनिच्छतोऽपि पादौ धुनोति हसन्ती हसतः ॥" इति च्छाया ।

२ "ज्ञातो मयैष सर्वो वृत्तान्तः सह चित्रफलकेन तद्देव्यै निवेदयिष्यामि ।" इति च्छाया ।

इतः पृष्टे पृष्टे किमिदमिति संत्रास्य सहसा
कृताश्लेषं धूर्तः स्मितमधुरमालिङ्गति वधूम्'

अथ नर्मस्फिञ्जः—

**नर्मस्फिञ्जः सुखारम्भो भयान्तो नवसंगमे ।**

यथा मालविकाग्निमित्रे संकेते नायकमभिसृतायां नायिकायां नायकः—

" विसृज सुन्दरि संगमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥

मालविका—भट्टा देवीए भयेण अत्तणो वि पिअं काउं ण पारेमि"[1] इत्यादि ।

अथ नर्मस्फोटः—

**नर्मस्फोटस्तु भावानां सूचितोऽल्परसो लवैः ॥ ५१ ॥**

यथा मालतीमाधवे—"मकरन्दः—

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदतोऽथ वा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥"

इत्यत्र गमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाश्यते ।

अथ नर्मगर्भः—

**छन्नेतृप्रतीचारो नर्मगर्भोऽर्थहेतवे ।**
**अङ्गैः सहास्यनिर्हास्यैरेभिरेपात्र कैशिकी ॥ ५२ ॥**

---

नवसंगमे=प्रथमसमागमे यत्रारम्भे सुखमन्ते च भयं भवति स नर्मस्फिञ्जः ।

भावानां लवैः=अल्पैः सात्त्विकादिभावैः अल्परसः=किंचिदनुरागः सूचितो भवति यत्र स नर्मस्फोटः ॥ ५१ ॥

छन्नेति—अर्थहेतवे=किंचित्प्रयोजनाय नायकस्य यः प्रच्छन्नः प्रचारः=प्रवेशः स नर्मगर्भः ।

उपपादितां साङ्गां कैशिकीमुपसंहरति—अङ्गैरिति, सहास्यैर्निर्हास्यैश्चैभिरङ्गैरेवात्र कैशिकी वृत्तिः प्रतिपादितेत्यर्थः

---

1 " भर्तः देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि । " इति छाया ।

यथाऽमरुशतके—

" दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ "

यथा ( च ) प्रियदर्शिकायां गर्भाङ्के वत्सराजवेषसुसंगतास्थाने साक्षाद्वत्सराजप्रवेशः ।

अथ सात्त्वती—

**विशोका सात्त्वती सत्त्वशौर्यत्यागदयार्जवैः ।**
**संलापोत्थापकावस्यां साङ्घात्यः परिवर्तकः ॥ ५३ ॥**

शोकहीनः सत्त्वशौर्यत्यागदयाहर्षादिभावोत्तरो नायकव्यापारः सात्त्वती तदङ्गानि च संलापोत्थापकसाङ्घात्यपरिवर्तकाख्यानि ।

तत्र—

**संलापको गभीरोक्तिर्नानाभावरसा मिथः ।**

यथा वीरचरिते—"रामः—अयं स यः किल सपरिवारकार्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः ? परशुरामः—राम राम दाशरथे ! स एवायमाचार्यपादानां प्रियः परशुः ।

शस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतो विजित एव मया कुमारः ।
एतावतापि परिरभ्य कृतप्रसादः
प्रादादमुं प्रियगुणो भगवान्गुरुर्मे ॥ "

इत्यादिनानाप्रकारभावरसेन रामपरशुरामयोरन्योन्यगभीरवचसा संलाप इति ।

अथोत्थापकः—

**उत्थापकस्तु यत्रादौ युद्धायोत्थापयेत्परम् ॥ ५४ ॥**

नर्मगर्भमुदाहरति—दृष्ट्वेति ।
वत्सराजवेषसुसंगतास्थाने=वत्सराजवेषविशिष्टसुसंगतास्थाने ॥ ५२ ॥
हर्षादिभावोत्तरः=हर्षादिभावप्रधानः ॥ ५३ ॥
" संलाप इति " इत्यस्यान्ते ' संलापकः ' इति पाठः ।
उत्थापयेत्=प्रेरयेत् । परम्=प्रतिस्पर्धिनम् ॥ ५४ ॥

यथा वीरचरिते—

" आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं नु कुतोऽद्य संप्रति मम त्वद्दर्शने चक्षुषः ।
त्वत्सांगत्यसुखस्य नास्मि विषयः किं वा बहुव्याहृतै-
रस्मिन्विश्रुतजामदग्न्यविजये बाहौ धनुर्जृम्भताम् ॥"

अथ साङ्घात्यः—

**मन्त्रार्थदैवशक्त्यादेः साङ्घात्यः सङ्घभेदनम् ।**

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायादीनां चाणक्येन स्वबुद्ध्या भेदनम् । अर्थशक्त्या तत्रैव यथा पर्वतकाभरणस्य राक्षसहस्तगमनेन मलयकेतुसहोत्थायिभेदनम् । दैवशक्त्या तु यथा रामायणे रामस्य दैवशक्त्या रावणाद्विभीषणस्य भेद इत्यादि ।

अथ परिवर्तकः—

**प्रारब्धोत्थानकार्यान्यकरणात्परिवर्तकः ॥ ५५ ॥**

प्रस्तुतस्योद्योगकार्यस्य परित्यागेन कार्यान्तरकरणं परिवर्तकः यथा वीरचरिते—

"हेरम्बदन्तमुसलोल्लिखितैकभित्ति
वक्षो विशाखविशिखव्रणलाञ्छनं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभाद्
यत्सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥

रामः—भगवन् ! परिरम्भणमिति प्रस्तुतप्रतीपमेतत् ।" इत्यादि ।

सात्त्वतीमुपसंहरन्नाऽऽरभटीलक्षणमाह—

**एभिरङ्गैश्चतुर्धेयं सात्त्वत्याऽऽरभटी पुनः ।**
**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ ५६ ॥**
**संक्षिप्तिका स्यात्संफेटो वस्तूत्थानावपातने ।**

---

मन्त्रपदेनात्र राजनीत्यङ्गभूतो गुप्तवादो ग्राह्यः ।

प्रारब्धात्=समारब्धाद् उत्थानकार्यात्=पौरुषकार्याद् युद्धादेर्यदन्यस्य=तद्विरुद्धस्य प्रीत्यानुकूल्यादेः करण सपादन तत् परिवर्तकः, परिवर्तनमिति यावत् ॥ ५५ ॥

आरभटीति—मायेन्द्रजालादिचेष्टितैरारभटी भवतीत्यर्थः

अस्या आरभट्याः संक्षिप्तिकाप्रभृतीनि चत्वारि अङ्गानि ।

माया=मन्त्रबलेनाविद्यमानवस्तुप्रकाशनम्, तन्त्रबलादिन्द्रजालम्।

तत्र—

संक्षिप्तवस्तुरचना संक्षिप्तिः शिल्पयोगतः ॥ ५७ ॥
पूर्वनेतृनिवृत्त्यान्ये नेत्रन्तरपरिग्रहः।

मृद्वंशदलचर्मादिद्रव्ययोगेन वस्तूत्थापनं संक्षिप्तिः यथोदयनचरिते किलिञ्जहस्तिप्रयोगः । पूर्वनायकावस्थानिवृत्त्यावस्थान्तरपरिग्रहमन्ये संक्षिप्तिकां मन्यन्ते। यथा वालिनिवृत्त्या सुग्रीवः यथा च परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम् "पुण्या ब्राह्मणजातिः—" इत्यादिना।

अथ संफेटः—

संफेटस्तु समाघातः क्रुद्धसंरब्धयोर्द्वयोः ॥ ५८ ॥

यथा माधवाऽघोरघण्टयोर्मालतीमाधवे। इन्द्रजिल्लक्ष्मणयोश्च रामायणप्रतिबद्धवस्तुषु।

अथ वस्तूत्थापनम्—

मायाद्युत्थापितं वस्तु वस्तूत्थापनमिष्यते।

यथोदात्तराघवे—

"जीयन्ते जयिनोऽपि सान्द्रतिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि रुचः कस्मादकस्मादमी।
एताश्चोग्रकबन्धरन्ध्ररुधिरैराध्मायमानोदरा
मुञ्चन्त्याननकन्दरानलमितस्तीव्रा रवाः फेरवाः॥"

इत्यादि।

---

तन्त्रेति–तन्त्रबलादविद्यमानवस्तुप्रकाशनमिन्द्रजालमित्यर्थः ॥ ५६ ॥

संक्षिप्तिकाया मतान्तरेण लक्षणमाह–पूर्वेति।

वस्तूत्थापनम्=वस्तुनिर्माणम्।

पूर्वनायकेति–पूर्वनायकनिवृत्त्या नायकान्तरपरिग्रहः, पूर्वावस्थानिवृत्त्याऽवस्थान्तरपरिग्रहश्चेत्यर्थः । यथाक्रममुदाहरणम् । अत्र "अवस्थान्तरपरिग्रहम्" इत्यत्र 'नायकावस्थान्तरपरिग्रहम्' इत्येवं पाठो युक्तो येन "यथा वालिनिवृत्त्या सुग्रीवः" इत्यस्य लक्षणं सुसङ्गच्छेत। मूलकारस्य तु नायकान्तरपरिग्रहे एव तात्पर्यम्। अवस्थान्तरपरिग्रहश्च प्रकृतानुकूलः प्रतिभाति।

समाघातः=परस्परमभिघातः।

रामायणप्रतिबद्धवस्तुषु=रामायणोक्तचरितेषु ॥ ५८ ॥

अथाऽवपातः—

**अवपातस्तु निष्क्रामप्रवेशत्रासविद्रवैः ॥ ५९ ॥**

यथा रत्नावल्याम्—

"कण्ठे कृत्वावशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलावलचरणवलत्किङ्किणीचक्रवालः ।
दत्तातङ्को गजानामनुसृतसरणिः संभ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरातः ॥
नष्टं वर्षवरैर्मनुष्यगणनाभावादकृत्वा त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥"

यथा च प्रियदर्शनायां ( प्रियदर्शिकायाम् ) प्रथमेऽङ्के विन्ध्यकेत्ववस्कन्दे ।

उपसंहरति—

**एभिरङ्गैश्चतुर्धेयम्, नार्थवृत्तिरतः परा ।**
**चतुर्थी भारती सापि वाच्या नाटकलक्षणे ॥ ६० ॥**
**कैशिकीं सात्त्वतीं चार्थवृत्तिमारभटीमिति ।**
**पठन्तः पञ्चमीं वृत्तिमौद्भटाः प्रतिजानते ॥ ६१ ॥**

सा तु लक्ष्ये कचिदपि न दृश्यते न चोपपद्यते रसेषु हास्यादीनां भारत्यात्मकत्वात् नीरसस्य च काव्यार्थस्याभावात् तिस्र एवैता अर्थवृत्तयः । भारती तु शब्दवृत्तिरामुखाङ्गत्वात्तत्रैव वाच्या ।

वृत्तिनियममाह—

**शृङ्गारे कैशिकी, वीरे सात्त्वत्याऽऽरभटी पुनः—।**
**रसे रौद्रे च बीभत्से, वृत्तिः सर्वत्र भारती ॥ ६२ ॥**

---

अवपात इति—कस्यचिद् निष्क्रमप्रवेशाभ्यां जन्येन त्रासेन=भयेन यो विद्रवः= पलायनं सोऽवपातः । किं वा प्रत्येकं निष्क्रमादीनामवपातत्वं विज्ञेयम् ॥५९॥

नाटकलक्षणे ( तृतीयप्रकाशारम्भे ) वाच्यास्तीति तत्रैव द्रष्टव्या भारतीत्यर्थः ।

सा=उद्भटोक्ता पञ्चमी वृत्तिः, सा चोद्भटकृतग्रन्थे एव द्रष्टव्या । तिस्रः=कैशिकी सात्त्वत्यारभटी चेति तिस्रः ॥ ६१ ॥

देशभेदभिन्नवेपादिस्तु नायकादिव्यापारः प्रवृत्तिरित्याह—

देशभापाक्रियावेपलक्षणाः स्युः प्रवृत्तयः ।
लोकादेवावगम्यैता यथौचित्यं प्रयोजयेत् ॥ ६३ ॥

तत्र पाठ्यं प्रति विशेपः—

पाठ्यं तु संस्कृतं नृणामनीचानां कृतात्मनाम् ।
लिङ्गिनीनां महादेव्या मन्त्रिजावेश्ययोः क्वचित् ॥ ६४ ॥

क्वचिदिति देवीप्रभृतीनां संबन्धः ।

स्त्रीणां तु प्राकृतं प्रायः शौरसेन्यधमेषु च ।

प्रकृतेरागतं प्राकृतम्=प्रकृतिः संस्कृतं तद्भवं तत्समं देशीत्यनेकप्रकारम् । सौरसेनी मागधी च स्वशास्त्रनियते ।

पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा ॥ ६५ ॥
यद्देशं नीचपात्रं यत्तद्देशं तस्य भापितम् ।
कार्यतश्चोत्तमादीनां कार्यो भापाव्यतिक्रमः ॥ ६६ ॥

स्पष्टार्थमेतत् ।

आमन्त्र्यामन्त्रकौचित्येनामन्त्रणमाह—

भगवन्तो वरैर्वाच्या विद्वद्देवर्पिलिङ्गिनः ।
विप्रामात्याग्रजाश्चार्या नटीसूत्रभृतौ मिथः ॥ ६७ ॥

आर्याविति संबन्धः ।

रथी सूतेन चायुष्मान्पूज्यैः शिष्यात्मजानुजाः ।
वत्सेति तातः पूज्योऽपि सुगृहीताभिधस्तु तैः ॥ ६८ ॥

अपिशब्दात्पूज्येन शिष्यात्मजानुजास्तातेति वाच्याः, सोऽपि तैस्तातेति सुगृहीतनामा चेति ।

---

भापानियममाह—पाठ्यमिति, पाठ्य भापा ।

मन्त्रिजा=मन्त्रिपुत्री ॥ ६४ ॥

भगवन्त इति—विद्वदादयो वरैः=श्रेष्ठपात्रैर्भगवच्छब्देन संबोध्याः, विप्रादय-श्चार्यशब्देन संबोध्याः, सूत्रधारेण नटी नट्या च सूत्रधार आर्यशब्देन संबोध्य इत्यर्थः ॥ ६७ ॥

सोऽपि=पूज्योऽपि । तैः=शिष्यादिभिः ॥ ६८ ॥

---

१ "शूरसेनी" "शौरसेनी" इत्यपि पाठौ ।

भावोऽनुगेन सूत्री च मार्षेत्येतेन सोऽपि च ।

सूत्रधारः पारिपार्श्वकेन भाव इति वक्तव्यः । स च सूत्रिणा मार्ष इति ।

देवः स्वामीति नृपतिर्भृत्यैर्भट्टेति चाधमैः ॥ ६९ ॥

आमन्त्रणीयाः पतिवज्ज्येष्ठमध्याधमैः स्त्रियः ।

विद्वद्देवादिस्त्रियो भर्तृवदेव देवरादिभिर्वाच्याः ।

तत्र स्त्रियं प्रति विशेषः ।

समा हलेति, प्रेष्या च हञ्जे, वेश्याऽज्जुका तथा ॥ ७० ॥

कुट्टिन्यम्बेत्यनुगतैः पूज्या वा जरती जनैः ।

विदूषकेण भवती राज्ञी चेटीति शब्द्यते ॥ ७१ ॥

पूज्या जरती अम्बेति । स्पष्टमन्यत् ।

चेष्टागुणोदाहृतिसत्त्वभावा-
नशेषतो नेतृदशाविभिन्नान् ।
को वक्तुमीशो भरतो न यो वा
यो वा न देवः शशिखण्डमौलिः ॥ ७२ ॥

॥ इति धनञ्जयकृतदशरूपकस्य द्वितीयः प्रकाशः समाप्तः ॥

दिङ्मात्रं दर्शितमित्यर्थः । चेष्टा लीलाद्याः, गुणा विनयाद्याः, उदाहृतयः संस्कृतप्राकृताद्या उक्तयः, सत्त्वं निर्विकारात्मकं मनः, भावः सत्त्वस्य प्रथमो विकारस्तेन हावादयो ह्युपलक्षिताः ॥

॥इति श्रीविष्णुसूनोधनिकस्य कृतौ दशरूपावलोके नेतृप्रकाशो नाम द्वितीयः प्रकाशः समाप्तः ।

---

अनुगेन=पारिपार्श्वकेन. सूत्री=सूत्रधार. भाव इतिपदेन सम्बोध्यः ।
म.=पारिपार्श्वकः । सूत्रिणा=सूत्रधारेण ॥ ६९ ॥
समा हलेतिशब्देन, प्रेष्या हञ्जे इतिशब्देन, वेश्याऽज्जुकेतिशब्देन, कुट्टिनी पूज्या जरती चाऽम्बेतिशब्देन, विदूषकेण राज्ञी चेटी च भवतीशब्देन सम्बोध्या ॥ ७०–७१ ॥

॥ इति सावलोकदशरूपकद्वितीयप्रकाशस्य प्रभाख्या व्याख्या समाप्ता ॥

---

१ "कुट्टिन्यनुगतैः पूजा अम्बेति युवतीजनैः." इति पाठान्तरम् ।

अथ

## तृतीयः प्रकाशः

बहुवक्तव्यतया रसविचारातिलङ्घनेन वस्तुनेतृरसानां विभज्य नाटकादिष्प्रयोगः प्रतिपाद्यते—

**प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् ।**
**संपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ॥ १ ॥**

उद्दिष्टधर्मकं हि नाटकमनुद्दिष्टधर्माणां प्रकरणादीनां प्रकृतिः शेषं प्रतीतम् ।

तत्र—

**पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।**
**प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ २ ॥**

पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला तत्स्थप्रथमप्रयोगव्युत्थापनादौ पूर्वरङ्गता तं विधाय विनिर्गते प्रथमं सूत्रधारे तद्वदेव वैष्णवस्थानकादिना प्रविश्यान्यो नटः काव्यार्थं स्थापयेत् स च काव्यार्थस्थापनात् सूचनात्स्थापकः ।

---

तृतीयप्रकाशमारभते—बह्विति । रसविचारे बहु वक्तव्यमस्तीति रसविचारमतिलङ्घ्य सूचीकटाहन्यायेनेत्यर्थः ।

अन्येषाम्=प्रकरणादीनाम् । सपूर्णलक्षणत्वात्=उक्तसपूर्णलक्षणत्वात् ।

उद्दिष्टाः साकल्येनोक्ता धर्मा यस्य तद् उद्दिष्टधर्मकम् । अनुद्दिष्टधर्माणाम्=साकल्येनानुक्तधर्माणाम् । प्रकृतिः=मूलमिति यावत् ॥ १ ॥

पूर्वरङ्गम्=मङ्गलाचरणादिकम्

तत्स्थेति—तत्स्थ=नाट्यशालास्थो यः प्रथमः प्रयोगव्युत्थापन( आरम्भ )—लक्षणो व्यापारः स पूर्वरङ्गः, उक्तं च भरतेन पञ्चमाध्याये—

" पादभागाः कलाश्चैव परिवर्तास्तथैव च ।
यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयुज्यते ।
तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमाः ॥ " इति

तद्वदेव=सूत्रधारवदेव । वैष्णवस्थानकादिना=वैष्णववेशादिना ।
काव्यार्थम्=अभिनेयकाव्यकथाम् । स्थापयेत्=सूचयेत् ॥ २ ॥

**दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।**
**सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ ३ ॥**

स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं च मर्त्यरूपो भूत्वा मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्—वस्तु बीजं मुखं पात्रं वा ।
वस्तु यथोदात्तराघवे—

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां संपदं
प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥"

बीजं यथा रत्नावल्याम्—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

मुखं यथा—

"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः ।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव संभृतबन्धुजीवः ॥"

पात्रं यथा शाकुन्तले—

"तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥"

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।**
**ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ ४ ॥**

रङ्गस्य प्रशस्तिं काव्यार्थानुगतार्थैः श्लोकैः कृत्वा

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवा पातु वः ॥"

---

मुखमिति–तदुक्तं साहित्यदर्पणे–"मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः" इति, यथा "आसादित" इत्यत्र श्लेषेण श्रीरामकर्तृकरावणवधः सूच्यते । चन्द्रहास इति रावणखड्गस्यापि नाम ॥ ३ ॥

रङ्गो नाट्यशाला । रङ्गम्–रङ्गस्थसामाजिकसमुदायम् ॥ ४ ॥

इत्यादिभिरेव भारतीं वृत्तिमाश्रयेत् ।

सा तु—

भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ।
भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥ ५ ॥

पुरुषविशेषप्रयोज्य संस्कृतबहुलो वाक्प्रधानो नटाश्रयो व्यापारो भारती, प्ररोचनावीथीप्रहसनाऽऽमुखानि चास्यामङ्गानि ।

यथोद्देश लक्षणमाह—

उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना ।

प्रस्तुतार्थप्रशंसनेन श्रोतृणा प्रवृत्युन्मुखीकरण प्ररोचना यथा रत्नावल्याम्—

"श्रीहर्षो निपुण कवि परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरित नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्ते पद किं पुन
र्मद्भाग्योपचयादय समुदित सर्वो गुणाना गण ॥"

वीथी प्रहसनं चापि स्वप्रसङ्गेऽभिधास्यते ॥ ६ ॥
वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्रैव, तत्पुनः ।
सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् ॥ ७ ॥
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ।
प्रस्तावना वा तत्र स्युः कथोद्घातः प्रवृत्तकम् ॥ ८ ॥
प्रयोगातिशयश्चाथ वीथ्यङ्गानि त्रयोदश ।

---

स्वप्रसङ्गे—तृतीयप्रकाशान्त्यभागे ॥ ६ ॥

यान्येव वीथ्यङ्गानि तान्यवामुखाङ्गानीत्यत्र प्रथममामुखस्य वक्तव्यत्वात् तत्पूर्वेऽत्रैव वीथ्यङ्गान्युच्यते—उद्घात्यकेत्यादिना, उद्घात्यकादीनि वीथ्यङ्गान्येवामुखाङ्गानि ग्राह्याणि । तत् आमुखम् । तत्पुन इत्यस्याग्रिमपद्यनान्वय ।

आमुखलक्षणमाह—सूत्रधार इति ॥ ७ ॥

आमुखस्य नामान्तरमाह—प्रस्तावनेति । तत्र=आमुखे । कथोद्घात प्रवृत्तक प्रयोगातिशयश्चेत्यामुखस्य त्रया भेदा । यानि वीथ्यङ्गानि तान्येवामुखस्याङ्गानीत्यर्थ ।

तत्र कथोद्घात —

**स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ॥ ९ ॥**

**गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधैव सः ।**

वाक्य यथा रत्नावल्याम्— यौगन्धरायण —"द्वीपादन्यस्मादपि—" इति ।

वाक्यार्थं यथा वेणीसंहारे— 'सूत्रधार —

निर्वाणवैरिदहना प्रशमादरीणा
नन्दन्तु पाण्डुतनया सह केशवेन ।
रक्तप्रसाधितभुव क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुता सभृत्या ॥"

ततोऽर्थेनाह—"भीम —

लाक्षागृहानलविषान्नसभाप्रवेशै
प्राणेषु वित्तनिचयेषु च न प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशा
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्रा ॥"

अथ प्रवृत्तकम्—

**कालसाम्यसमाक्षिप्तप्रवेशः स्यात्प्रवृत्तकम् ॥ १० ॥**

प्रवृत्तकालसमानगुणवर्णनया सूचितपात्रप्रवेश प्रवृत्तक यथा—

" आसादितप्रकटनिर्मलचन्द्रहास
प्राप्त शरत्समय एप विशुद्धकान्त ।
उत्खाय गाढतमस घनकालमुग्र
रामो दशास्यमिव सभृतबन्धुजीव ॥

( तत प्रविशति यथानिर्दिष्टो राम ) ' ।

वाक्य यथेति–सूत्रधारस्य वाक्य गृहीत्वा पात्रप्रवेशो यथा रत्नावल्यामित्यर्थ ।
वाक्यार्थ यथेति–सूत्रधारस्य वाक्यार्थं गृहीत्वा पात्रप्रवेशो यथा वेणीसंहार इत्यर्थ ॥ ८ ९ ॥

कालेति–कालसाम्येन समाक्षिप्त य पात्रस्य प्रवेश स कालसाम्यसमाक्षिप्त प्रवेश मध्यमपदलोपी समास । अर्थसमन्वयश्चोदाहरणे स्पष्ट एव ॥ १० ॥

१ " वाक्य वाक्यार्थमथवा प्रस्तुत यत्र सूत्रिण " इति पाठान्तरम् ।

अथ प्रयोगातिशयः—

एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥ ११ ॥

यथा "एष राजेव दुष्यन्त" इति ।

अथ वीथ्यङ्गानि—

उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ।
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ॥ १२ ॥
असत्प्रलापव्याहारमृदवानि त्रयोदश ।

तत्र—

गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा ॥ १३ ॥
यत्रान्योन्यं समालापो द्वेधोद्घात्यं तदुच्यते ।

गूढार्थं पदं तत्पर्यायश्चेत्येवं माला प्रश्नोत्तरं चेत्येवं वा माला द्वयोरुक्तिप्रत्युक्तौ तद्द्विविधमुद्घात्यकम् । तत्राद्यं विक्रमोर्वश्यां यथा—"विदूषकः—भो वअस्स को एसो कामो जेण तुमं पि दूमिज्जसे सो किं पुरिसो आदु इत्थिअ त्ति । राजा—सखे

मनोजातिरनाधीना सुखेष्वेव प्रवर्तते ।
स्नेहस्य ललितो मार्गः काम इत्यभिधीयते ॥

विदूषकः—एवं पि ण जाणे । राजा—वयस्य इच्छाप्रभव स इति । विदूषक—किं जो ज इच्छदि सो त कामेदित्ति । राजा—अथ किम् । विदूषक—तो जाणिदं जह अहं सूअआरसालाए भोअणं इच्छामि ।"

गृढेति–गूढार्थपदस्य तदर्थव्याख्यानार्थं तत्पर्याय पदानां या माला=अनेकत्व तद् उद्घात्यक यथा प्रथमोदाहरणेऽनेकधा कामपदार्थव्याख्यानम् । प्रश्नोत्तरयोश्च या माला तदप्युद्घात्यक यथा द्वितीयोदाहरणे । "उक्तिप्रत्युक्तौ" इत्यत्र 'यत्र' इति शेष ॥ १३ ॥

१ "भो वयस्य क एष कामो येन त्वमपि दूयसे स किं पुरुषोऽथवा स्त्रीति।" २ "एवमपि न जानामि ।" । ३ "किं यो यदिच्छति स तत्कामयतीति ।" ४ "तज्ज्ञात यथाहं सूपकारशालायां भोजनमिच्छामि ।" इति च्छाया ।

द्वितीयं यथा पाण्डवानन्दे—

" का श्लाघ्या गुणिनां क्षमा परिभवः को यः स्वकुलैः कृतः
　किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
　कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥"

अथावलगितम्—

**यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ॥ १४ ॥**
**प्रस्तुतेऽन्यत्र वान्यत्स्यात्तच्चावलगितं द्विधा ।**

तत्राद्यं यथोत्तरचरिते समुत्पन्नवनविहारगर्भदोहदायाः सीताया दोहदकार्येऽनु ( ण ) प्रविश्य जनापवादादरण्ये त्यागः । द्वितीयं यथा छलितरामे—"रामः—लक्ष्मण तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि तदवतीर्य गच्छामि ।

कोऽपि सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षमाली च चामरी च विराजते ॥ "

इति भरतदर्शनकार्यसिद्धिः ।

अथ प्रपञ्चः—

**असद्भूतं मिथःस्तोत्रं प्रपञ्चो हास्यकृन्मतः ॥ १५ ॥**

असद्भूतेनार्थेन पारदार्यादिनैपुण्यादिना यान्योन्यस्तुतिः स प्रपञ्चः यथा कर्पूरमञ्जर्याम्—भैरवानन्दः—

रंण्डा चण्डा दिक्खिदा धम्मदारा मज्जं मसं पिज्जए खज्जए अ ।
भिक्खा भोज्जं चम्मखण्डं च सेज्जा कोलो धम्मो कस्स णो होइ रम्मो ॥[1]

---

यत्रेति—एकया क्रियया यत्र कार्यद्वयं साध्यते तद् अवलगितं यथा श्रीसीताया वनप्रेषणक्रियया सीतात्यागो दोहदसंपत्तिश्चेति द्वयमेव सिद्धम् । यत्र चान्यस्मिन् प्रस्तुतेऽन्यत् क्रियते तदप्यवलगितं यथा विमानेनायोध्याप्रवेशे प्रस्तुते विमानादवतीर्यायोध्याप्रवेशः कृत इति ।

" दोहदकार्येऽनुप्रविश्य " इत्यस्य ' दोहदकार्याभिमुखीभूत्वा ' इत्यर्थः, वस्तुतस्त्वत्र ' दोहदकार्येण प्रविश्य ' इत्येव पाठो युक्तः—दोहदकार्यार्थं प्रविश्येत्यर्थः ॥ १४ ॥

---

१ "रण्डा चण्डा दीक्षिता धर्मदारा मद्यं मांसं पीयते खाद्यते च ।
　भिक्षा भोज्यं चर्मखण्डं च शय्या कौलो धर्मः कस्य न भवति रम्यः ॥"
इति च्छाया ।

अथ त्रिगतम्—

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह ।
नट्यादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥ १६ ॥

यथा विक्रमोर्वश्याम्—

"मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं परभृतनाद एष धीरः ।
कैलासे सुरगणसेविते समन्तात्
किन्नर्यः कलमधुराक्षरं प्रगीताः ॥"

अथ छलनम्—

प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम् ।[1]

यथा वेणीसंहारे—"भीमार्जुनौ—

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्योधनोऽसौ कथयत पुरुषा द्रष्टुमभ्यागतौ स्वः ॥"

अथ वाक्केली—

विनिवृत्त्यास्य वाक्केली द्विस्त्रिः प्रत्युक्तितोऽपि वा ॥ १७ ॥

अस्येति वाक्यस्य प्रक्रान्तस्य साकाङ्क्षस्य विनिवर्तनं वाक्केली, द्विस्त्रिर्वा उक्तिप्रत्युक्तय, तत्राद्या यथोत्तरचरिते—"वसन्ती—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।

---

नट्यादीति—नट्यादित्रयाणामालापात् त्रिगतमित्युच्यते तच्च पूर्वरङ्गे भवतीत्यर्थः । श्रुतिसाम्यात्—शब्दसाम्यात् ॥ १६ ॥

अस्य—वाक्यस्य विनिवृत्त्या—ऊनोक्त्या वाक्केली भवतीत्यर्थः ।

अस्येतीति—अत्रत्यमस्येतिपदं पूर्वोक्तवाक्यपरामर्शकमित्यर्थः ।

"त्वं जीवितम्" इत्यत्र "तामेव" इत्यनन्तरम् 'निर्गलितमन्त्र' इति, शेष इति साकाङ्क्षवाक्यम्, अधिकं तूत्तरचरिते एव तृतीयाङ्के द्रष्टव्यम् ।

---

१ "छलना" इत्यपि पाठः ।

इत्यादिभि. प्रियशतैरनुरुध्य मुग्धा
तामेन शान्तमथवा किमत. परेण ॥"

उक्तिप्रत्युक्तितो यथा रत्नावल्याम्—"विदूषक —भोदि मअणिए म वि एदं चच्चरिं सिक्खावेहि । मदनिका—हदास ण क्खु एसा चच्चरी । दुवदिखण्डअं क्खु एदम् । विदूषकः—भोदि किं एदिणा खण्डेण मोदआ करीअन्ति । मदनिका—णहि पढीअदि क्खु एदम् ।" इत्यादि ।

अथाधिबलम्—

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाऽधिबलं भवेत् ।

यथा वेणीसंहारे—"अर्जुन —

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डुपुत्रः ॥"

इत्युपक्रमे "राजा—अरे नाहं भवानिव विकत्थनाप्रगल्भ. किं तु—
द्रक्ष्यन्ति न चिरात्सुतं बांधवास्त्वा रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणम् ॥"

इत्यन्तेन भीमदुर्योधनयोरन्योन्यवाक्यस्याधिक्योक्तिरधिबलम् ।

अथ गण्ड.—

गण्डः प्रस्तुतसंबन्धिभिन्नार्थं सहसोदितम् ॥ १८ ॥

यथोत्तरचरिते—"राम —

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्या. स्पर्शो वपुषि बहलश्चन्दनरस ।

---

उक्तिप्रत्युक्तीनां प्रश्नोत्तरात्मकत्वे उद्घात्यकमन्यथा वाक्केलीति विशेषोऽनुसधेय ॥ १७ ॥

गण्ड इति-प्रस्तुतसबद्धो यो विरुद्धोऽर्थस्तत्सूचक सहसोदित यद् वाक्य तद्ग

---

१ "भवति मदनिके मामप्येता चर्चरीं शिक्षय" । २ "हताश न खल्वेषा चर्चरी द्विपदिखण्डक खल्वेतत् ।" । ३ "भवति किमेतेन खण्डेन मोदका क्रियन्ते ।" ४ "नहि पठ्यते खल्वेतत् ।" इति छाया ।

अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

( प्रविश्य ) प्रतीहारी—देवं उअत्थिदो। रामः—अयि कः। प्रतीहारी—देवंस्स आसण्णपरिचारओ दुम्मुहो।" इति।

अथावस्यन्दितम्—

रसोक्तस्यान्यथा व्याख्या यत्रावस्यन्दितं हि तत्।

यथा छलितरामे—"सीता—जाद कल्लं क्खु तुह्मेहिं अजुज्झाए गन्तव्वं तहिं सो राआ विणएण णमिदव्वो। लवः—अम्ब किमावाभ्यां राजोपजीविभ्यां भवितव्यम्। सीता—जाद सो क्खु तुह्माणं पिदा। लवः—किमावयो रघुपतिः पिता। सीता—( साशङ्कम् ) जाद ण क्खु परं तुह्माणं सअलाए ज्जेव्व पुहवीए।" इति।

अथ नालिका—

सोपहासा निगूढार्था नालिकैव प्रहेलिका ॥ १९ ॥

यथा मुद्राराक्षसे—"चरः—हंहो बह्मण मा कुप्प किं पि तुह उअज्झाओ जाणादि किं पि अह्मारिसा जणा जाणन्ति। शिष्यः—किमस्मदुपाध्यायस्य सर्वज्ञत्वमपहर्तुमिच्छसि। चरः—यदि दे उवज्झाओ सव्वं जाणादि ता जाणादु दाव कस्स चन्दो अणभिप्पेदो त्ति।

ण्ड इत्युच्यते यथात्र प्रस्तुता या श्रीजानकीप्रीतिस्तद्विरुद्धार्थकम् "देव उअत्थिद:" इति वाक्यम् ॥ १८ ॥

रसोक्तस्य वाक्यस्येत्यर्थः। यथात्र "सोक्खु तुम्हाणं पिदा" इतिवाक्यस्य "सअलाए ज्जेव्वपुहवीए" इत्येवमन्यथानयनम्।

सोपहासेति–एवकारस्य भिन्नक्रमत्वात् 'प्रहेलिकैव' इत्यन्वयः। "संवरणकार्युत्तर प्रहेलिका" इति दर्पणे, अर्थसमवायश्चोदाहरणे स्पष्ट एव ॥ १९ ॥

१ "देव उपस्थितः।" २ "देवस्यासन्नपरिचारको दुर्मुखः।" ३ "जात कल्य खलु युवाभ्यामयोध्यायां गन्तव्यं तर्हि स राजा विनयेन नमितव्य।" ४ "जात स खलु युवयोः पिता।" ५ "जात न खलु परं युवयोः सकलाया एव पृथिव्याः।" ६ "हहो ब्राह्मण मा कुप्य किमपि तवोपाध्यायो जानाति किमप्यस्मादृशा जना जानन्ति।" ७ "यदि त उपाध्यायः सर्वं जानाति तज्जानातु तावत्कस्य चन्द्रोऽनभिप्रेत इति।" इति च्छाया।

शिष्यः—किमनेन ज्ञातेन भवति ।" इत्युपक्रमे "चाणक्य—चन्द्रगुप्तादपरक्तान्पुरुषाञ्जानामि ।" इत्युक्तं भवति ।

अथाऽसत्प्रलाप—

असंबद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः ।

ननु चासंबद्धार्थत्वेऽसंगतिर्नाम वाक्यदोष उक्तः ? तन्न—उत्स्वप्नायितमदोन्मादशैशवादीनामसंबद्धप्रलापितैव विभावो यथा—

"अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुके-
रङ्गुल्या विषकर्बुरान्गणयत. संस्पृश्य दन्ताङ्कुरान् ।
एकं त्रीणि नवाष्ट सप्त षडिति प्रध्वस्तसंख्याक्रमा
वाच क्रौञ्चरिपो. शिशुत्वविकलाः श्रेयांसि पुष्णन्तु व ॥"

यथा च—

"हंस प्रयच्छ मे कान्ता गतिस्तस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥"

यथा वा—

"भुक्ता हि मया गिरयः स्नातोऽहं वह्निना पिबामि वियत् ।
हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्यामि ॥"

अथ व्याहार.—

अन्यार्थमेव व्याहारो हास्यलोभकरं वचः ॥ २० ॥

यथा मालविकाग्निमित्रे लास्यप्रयोगावसाने—"( मालविका निर्गन्तुमिच्छति ) विदूषक—मा दाव उवएससुद्धा गमिस्ससि ।" इत्युपक्रमे "गणदास —( विदूषकं प्रति ) आर्य उच्यता यस्त्वया क्रमभेदो लक्षित ।" विदूषक.—पढमं पच्चूसे बह्मणस्स पूआ भोदि सा तए लङ्घिदा

विभाव इति–विभाव्यतेऽनेनेति विभाव , मदोन्मादादिकमसत्प्रलापेनैव निभाव्यते=विज्ञायते इति मदोन्मादादीनामसत्प्रलापिता विभाव इत्यर्थ "विभाव " इत्यत्र ' अनुभाव ' इति तु युक्त पाठ ।

अन्यार्थमिति–अन्यार्थम्= यदुच्यते तदतिरिक्तप्रयोजनक हास्यलोभकर वचो

१ "यथोत्तरम्" इत्यपि पाठ । २ "मा तावत् उपदेशशुद्धा गमिष्यसि " ३ "प्रथम प्रत्यूषे ब्राह्मणस्य पूजा भवति सा तया लङ्घिता ।" इति च्छाया ।

( मालविका स्मयते )। " इत्यादिना नायकस्य विश्रब्धनायिकादर्शन-प्रयुक्तेन हास्यलोभकारिणा वचनेन व्याहारः।

अथ मृदवम्—

**दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्।**

यथा शाकुन्तले—

"मेदच्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामुपलक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥"

इति मृगयादोषस्य गुणीकारः।

यथा च—

" सततमनिर्वृतमानसमायाससहस्रसंकुलक्लिष्टम्।
गतनिद्रमविश्वासं जीवति राजा जिगीषुरयम्॥"

इति राज्यगुणस्य दोषीभावः।

उभयं वा—

" सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥"

इति प्रस्तावनाङ्गानि।

**एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत्॥ २१॥**
**प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत्।**

तत्र—

**अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्॥ २२॥**

---

व्याहार इत्युच्यते। व्याहार=शब्दप्रयोग॥ २०॥

एषामिति—कथोद्घातप्रवृत्तकप्रयोगातिशयानां मध्येऽन्यतमेनेत्यर्थः, एवमेव प्रयोगेषु दर्शनात् नतूद्घात्यकादिनाङ्गेनेत्यर्थः। वस्तु=कथां प्रपञ्चयेत्=आरभेत॥ २१॥

अभिगम्यगुणैः=अभिरम्यगुणैरुत्कृष्टगुणैरिति यावत्॥ २२॥

कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ।
प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः ॥ २३ ॥
तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ।

यत्रेतिवृत्ते सत्यत्यागसंवादकारिनीतिशास्त्रप्रसिद्धाभिगामिकादिगुणयुक्तो रामायणमहाभारतादिप्रसिद्धो धीरोदात्तो राजर्षिर्दिव्यो वा नायकस्तत्प्रख्यातमेवात्र नाटक आधिकारिकं वस्तु विधेयमिति ।

यत्तत्रानुचितं किंचिन्नायकस्य रसस्य वा ॥ २४ ॥
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ।

यथा छद्मना वालिवधो मायुराजेनोदात्तराघवे परित्यक्तः । वीरचरिते तु रावणसौहृदेन वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः ।

आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभज्य च ॥ २५ ॥
खण्डशः संधिसंज्ञांश्च विभागानपि खण्डयेत् ।

अनौचित्यरसविरोधपरिहारपरिशुद्धीकृतसूचनीयदर्शनीयवस्तुविभागफलानुसारेणोपक्षिप्तबीजबिन्दुपताकाप्रकरीकार्यलक्षणार्थप्रकृतिकं पञ्चावस्थानुगुण्येन पञ्चधा विभजेत् । पुनरपि चैकैकस्य भागस्य द्वादश त्रयोदश चतुर्दशेत्येवमङ्गसंज्ञान् संधीनां विभागान्कुर्यात् ।

चतुःषष्टिस्तु तानि स्युरङ्गानीत्यपरं तथा ॥ २६ ॥
पताकावृत्तमप्यूनमेकाद्यैरनुसंधिभिः ।
अङ्गान्यत्र यथालाभमसंधिं प्रकरीं न्यसेत् ॥ २७ ॥

---

त्रय्या =वेदत्रयस्य । यत्र–श्रीरामायणादौ ॥ २३ ॥

तत्प्रख्यातम्=श्रीरामायणादिप्रसिद्धम् । वृत्तम्=कथा । अत्र=नाटके ॥ २४ ॥

खण्डश इति–संधिसंज्ञान् भागान् पञ्चधा विभक्तानपि खण्डयेत्=अङ्गसंख्याकविभागैर्विभजेदित्यर्थः । अङ्गानां संख्या चाग्रिमवाक्येन स्मारयति–चतुरिति । "अङ्गसंज्ञान्" इत्यत्र "अङ्गसंज्ञानाम्" इति पाठस्त्वयुक्त एव प्रतिभाति ॥२६॥

१ पताकानामकाऽप्रधानेतिवृत्तस्य सन्धिसम्बन्धसमयमाह–अपरं तथेति, अपरं पताकावृत्तमित्यन्वयः । "अनुसंधिभिः" इत्यस्य 'अप्रधानमुखादिसंधिभिः' इत्यर्थः ।

अपरमपि प्रासङ्गिकमितिवृत्तमेराद्यैरनुसधिभिर्न्यूनमिति प्रधानेतिवृत्तादेकद्वित्रिचतुर्भिरनुसंधिभिर्न्यून पताकेतिवृत्तं न्यसनीयम् । अङ्गानि च प्रधानाविरोधेन यथालाभं न्यसनीयानि । प्रकरीतिवृत्त त्वपरिपूर्णसंधि विधेयम् ।

तत्रैव विभक्ते—

आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः ।

इयमत्र कार्ययुक्ति —

अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ॥ २८ ॥
यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ।
यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ २९ ॥
आदावेव तदाङ्कः स्यादामुखाक्षेपसश्रयः ।

स च—

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ॥ ३० ॥
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ।

रङ्गप्रवेशे साक्षान्निर्दिश्यमाननायकव्यापारो बिन्दूपक्षेपार्थपरिमितो-

---

प्रधानेतिवृत्तापेक्षया पताकायाऽप्रधानेतिवृत्तस्य न्यूनत्वेनाल्पदेशव्याप्यत्वेन तदपेक्षया न्यूनसख्यात्सधिसबन्धस्तेनोक्त । सधीना प्रधानेतिवृत्तानुषङ्गेणैव पताकया सबन्धद्योतनार्थम् "अनुसंधिभिरित्युक्तम् । विधेयमितिशेष । अत्र=पताकायाम् । प्रकरीतिवृत्तस्य विशेषमाह—असन्धिमिति । प्रकरीतिवृत्तस्याऽत्यल्पत्वात् तत्र सन्धिसमवाययोग्यतैव न सभवतीति भाव ॥ २७ ॥

आदौ=नाटकायारम्भे ।

अपेक्षितमिति—अपेक्षितं नीरसं च वस्तुविस्तरं परित्यज्य यदा शेषम्=मध्यावस्य वस्तु सदर्शयेत्—प्रदर्शयितुमिच्छेत् कविस्तदा तत्प्रदर्शनार्थं विष्कम्भक कुर्यात् यदा तु मूलात्=आरम्भादेव सरस वस्तु प्रवर्तते तदा विष्कम्भको न कर्तव्य किं त्वामुखेनैवोक्तप्रयोगातिशयादिरूपेण पात्राक्षेप कर्तव्य इत्यर्थ । आमुखेन पात्राक्षेप सश्रयो यस्य स आमुखाक्षेपसश्रय इत्यङ्कविशेषणम् ॥ २८–२९ ॥

स=अङ्क । रङ्गप्रवेशे इति—नायकस्य रङ्गप्रवेशे जाते रङ्गप्रवेशमारभ्य नायकव्यापारयुक्त इत्यर्थ । द्वितीयार्थप्रकृतिभूतबिन्दोरुपक्षेपलक्षणार्थेन=निक्षेपेण परि-

ऽनेकप्रयोजनसविधानरसाधिकरण उत्सङ्ग इवाङ्क ।

तत्र च—

अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः ॥ ३१ ॥
गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ।

अङ्गिन इत्यङ्गिरसस्थायिन समहात्स्थायिनेति रसान्तरस्थायिनो ग्रहणम् । गृहीतमुक्तै॰ परस्परव्यतिकीर्णैरित्यर्थ ।

न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ॥ ३२ ॥
रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ।

कथासध्यङ्गोपमादिलक्षणैर्भूषणादिभि ।

एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा ॥ ३३ ॥
अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ।

ननु च रसान्तरस्थायिनेत्यनेनैव रसान्तराणामङ्गत्वमुक्तम्, तत्र—यत्र रसान्तरस्थायी स्वानुभावविभावव्यभिचारियुक्तो भूयसोपनिबध्यते तत्र रसान्तराणामङ्गत्वम्, केवलस्थाय्युपनिबन्धे तु स्थायिनो व्यभिचारितैव ।

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ॥ ३४ ॥
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ।
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥ ३५ ॥

---

मित =युक्त इतियावत् । नानाप्रकारार्थसंविधानस्य=अनेकप्रकारप्रयोजनसपादनस्य रसस्य चाश्रयो भवत्यङ्क इत्यर्थ ॥ ३०–३१ ॥

अङ्गिन =अङ्गिन इतिपदेनैवेत्यर्थ । परस्परव्यतिकीर्णै =परस्पर मिश्रितै सापेक्षैर्वा ।

न चेति–रसस्यातिनिबन्धनेन वस्तु=इतिवृत्त विच्छिन्न न कुर्यादित्यर्थ ॥३२॥

ननु चेति–अत्र 'पुनरत्र रसान्तराणामङ्गत्वकथनेन पुनरुक्तिदोष ' इति शेष । परिहरति–तत्रेति । केवलस्योपनिबद्धस्य स्थायिनो व्यभिचारित्वमेव भवतीति पूर्वत्र केवलस्य स्थायिनोऽङ्गत्वमुक्तमिति व्यभिचारीभूतस्थायिनोङ्गत्वमुक्तेन प्राप्तम्, अत्र च स्वानुभावादिपरिपुष्टस्य रसतां प्राप्तस्य स्थायिनोङ्गत्वमुक्तमिति न पौनरुक्त्यमिति भाव ।

संरोध =अन्यनृपतिप्रयुक्तनगरादिसरोध ॥ ३५ ॥

---

१ "अङ्गस्य" इत्यपि पाठ ।

अङ्कैर्नैवोपनिबध्नीत प्रवेशकादिभिरेव सूचयेदित्यर्थः ।

नाधिकारिवधं क्वापि त्याज्यमावश्यकं न च ।

अधिकृतनायकवधं प्रवेशकादिनापि न सूचयेत्, आवश्यकं तु देवपितृकार्याद्यवश्यमेव कचित्कुर्यात् ।

एकाहाचरितैकार्थमित्थमासन्ननायकम् ॥ ३६ ॥
पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ।

एकदिवसप्रवृत्तैकप्रयोजनसंनद्धमासन्ननायकमबहुपात्रप्रवेशमङ्कं कुर्वीत, तेषां पात्राणामवश्यमङ्कस्यान्ते निर्गमः कार्यः ।

पताकास्थानकान्यत्र बिन्दुरन्ते च बीजवत् ॥ ३७ ॥
एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ।
पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम् ॥ ३८ ॥

इत्युक्तं नाटकलक्षणम् ।

अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ।
अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥ ३९ ॥
धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् ।
शेषं नाटकवत्संधिप्रवेशकरसादिकम् ॥ ४० ॥

कविबुद्धिविरचितमितिवृत्तं लोकसंश्रयम्=अनुदात्तम् अमात्याद्यन्यतमं धीरप्रशान्तनायकं विपदन्तरितार्थसिद्धिं कुर्यात् प्रकरणे, मन्त्री अमात्य एव । सार्थवाहो वणिग्विशेष एवेति, स्पष्टमन्यत् ।

नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा ।
कचिदेकैव कुलजा वेश्या क्वापि द्वयं कचित् ॥ ४१ ॥
कुलजाभ्यन्तरा, बाह्या वेश्या, नातिक्रमोऽनयोः ।

---

कुर्यात्=प्रदर्शयेत् ॥ ३६ ॥

अन्ते च बीजवदिति–अन्ते बीजपरामर्शयुक्तं कुर्यादित्यर्थः ॥ ३७ ॥

"उत्पाद्यम्" इत्यस्य "कविबुद्धिविरचितम्" इत्यर्थः "सापायम्" इत्यस्य "विपदन्तरितार्थसिद्धिम्" इत्यर्थः । अमात्यो मन्त्र्येव सार्थवाह एव वणिग्विशेष इत्यन्वयः ॥ ३९–४० ॥

प्रकरणे उपनिबध्यनायिकामाह–नायिकेति । अनयोः=कुलजावेश्ययोः, अति-

आभिः प्रकरणं त्रेधा, संकीर्णं धूर्तसंकुलम् ॥ ४२ ॥

वेशो भृतिः सोऽस्या जीवनमिति वेश्या तद्विशेषो गणिका यदुक्तम्—

" आभिरभ्यर्थिता वेश्या रूपशीलगुणान्विता ।
लभते गणिकाशब्दं स्थानं च जनसंसदि ॥ "

एवं च कुलजा वेश्या उभयमिति त्रेधा प्रकरणे नायिका यथा वेश्यैव तरङ्गदत्ते कुलजैव पुष्पदूषितके ते द्वेऽपि मृच्छकटिकायामिति । कितवद्यूतकारादिधूर्तसंकुलं तु मृच्छकटिकादिवत्संकीर्णप्रकरणमिति ।

अथ नाटिका—

लक्ष्यते नाटिकाप्यत्र संकीर्णान्यनिवृत्तये ।

अत्र केचित्—

" अनयोश्च बन्धयोगादेको भेदः प्रयोक्तृभिर्ज्ञेयः ।
प्रख्यातस्त्वितरो वा नाटीसंज्ञाश्रिते काव्ये ॥ "

इत्यमुं भरतीयं श्लोकम् 'एको भेदः प्रख्यातो नाटिकाख्य इतरस्त्वप्रख्यातः प्रकरणिकासंज्ञो नाटीसंज्ञया द्वे काव्ये आश्रिते' इति व्याचक्षाणा प्रकरणिकामपि मन्यन्ते तदसत्—उद्देशलक्षणयोरनभिधानात् समानलक्षणत्वे वा भेदाभावात् वस्तुरसनायकानां प्रकरणाऽभेदात् प्रकरणिकायाः, अतोऽनुद्दिष्टाया नाटिकाया यन्मुनिना लक्षणं कृतं तत्रायमभिप्रायः—शुद्धलक्षणसंकरादेव तल्लक्षणे सिद्धे लक्षणकरणं संकीर्णानां नाटिकैव कर्तव्येति नियमार्थं विज्ञायते ।

---

क्रमोनास्ति नाम प्रकरणे नायिका कुलजा वा वेश्या वोभयं वा भवति नायेति नियम इत्यर्थः ॥ ४१–४२ ॥

संकीर्णेति–नाटिकादीनामुपरूपकाणां नाटकप्रकरणादिलक्षणैः संकीर्णत्वेन संकीर्णासु नाटिकादिषु मध्ये नाटिकैव विधेया न त्रोटकादिकमित्यर्थः ।

अनयो =नाटिकाप्रकरणिकयो । बन्धयोगात्=इतिवृत्तादिसाम्यात् । द्वे=नाटिकाप्रकरणिकेति द्वे । उद्देशः =प्राथमिकनामकीर्तनम् ।

शुद्धेति–शुद्धस्य नाटकादेर्यल्लक्षणं तत्संकरादेव–नाटकप्रकरणलक्षणयोः संकरादेव तल्लक्षणे=नाटिकालक्षणे सिद्धे नाम किंचिन्नाटकलक्षणेन किंचित्प्रकरणलक्षणेन संकीर्णा वक्ष्यमाणरीत्या नाटिका विधेयेति सिद्धेऽपि नाटिकालक्षणकरणं संकीर्णानामुपरूपकाणां मध्ये नाटिकैव कर्तव्या न त्रोटकादिकमिति नियमार्थमित्यर्थः ।

तमेव संकरं दर्शयति—

तत्र वस्तु प्रकरणान्नाटकान्नायको नृपः ॥ ४३ ॥

प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः ।

उत्पाद्येतिवृत्तत्वं प्रकरणधर्मः प्रख्यातनृपनायकादित्वं तु नाटकधर्म इति, एवं च नाटकप्रकरणनाटिकातिरेकेण वस्त्वादेः प्रकरणिकायामभावादङ्कपात्रभेदाद् यदि भेदस्तत्र ( तदा )

स्त्रीप्रायचतुरङ्कादिभेदकं यदि चेष्यते ॥ ४४ ॥

एकद्वित्र्यङ्कपात्रादिभेदेनानन्तरूपता ।

तत्र नाटिकेतिस्त्रीसमाख्ययौचित्यप्राप्तं स्त्रीप्रधानत्वम्, कैशिकीवृत्त्याश्रयत्वाच्च तदङ्गसंख्ययाऽल्पावमर्शत्वेन चतुरङ्कत्वमप्यौचित्यप्राप्तमेव ।

विशेषस्तु—

देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ ४५ ॥

गम्भीरा मानिनी, कृच्छ्रात्तद्वशान्नेतृसंगमः ।

प्राप्या तु—

नायिका तादृशी मुग्धा दिव्या चातिमनोहरा ॥ ४६ ॥

तादृशीति नृपवंशजत्वादिधर्मातिदेशः ।

अन्तःपुरादिसंबन्धादासन्ना श्रुतिदर्शनैः ।

अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ॥ ४७ ॥

नेता तत्र प्रवर्तेत देवीत्रासेन शङ्कितः ।

तस्यां मुग्धनायिकायामन्तःपुरसंबन्धसंगीतकसंबन्धादिना प्रत्या-

तत्र=नाटिकायाम् ॥ ४३ ॥

एवं चेति–नाटकप्रकरणनाटिकातिरेकेण वस्त्वादेः प्रकरणिकायामभावेऽपि यद्यङ्कपात्रादिभेदान्नाटिकातः प्रकरणिकाया भेद उच्यते तदा एकद्वित्र्यङ्कपात्रादिभेदेन रूपकाणामनन्ता भेदाः स्युः, न चैतदिष्टमिति न प्रकरणिका पृथग् वाच्येत्यर्थः ॥ ४४ ॥

विशेषः= नाटिकायां विशेषः । तत्र= नाटिकायाम् ॥ ४५ ॥

तद्वशात्=देवीवशादेव नायकस्य नूतननायिकया सह समागमो नाटिकायां भवतीत्यर्थः ॥ ४६ ॥

तस्यां तत्रेति नूतननायिकायामित्यर्थः ॥ ४७ ॥

---

१ "प्राप्यान्या" इत्यपि पाठः ।

सन्नायां नायकस्य देवीप्रतिबन्धान्तरित उत्तरोत्तरो नवावस्थानुरागो निबन्धनीयः ।

कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिव नाटिका ॥ ४८ ॥

प्रत्यङ्कोपनिबद्धाऽभिहितलक्षणकैशिक्यङ्गचतुष्टयवती नाटिकेति ।

अथ भाणः—

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ॥ ४९ ॥
संबोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः ॥ ५० ॥
भूयसा भारती वृत्तिरेकाङ्कं वस्तु कल्पितम् ।
मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ॥ ५१ ॥

धूर्ताश्चौरद्यूतकारादयस्तेषां चरितं यत्रैक एव विटः स्वकृतं परकृतं चोपवर्णयति स भारतीवृत्तिप्रधानत्वाद्भाणः । एकस्य चोक्तिप्रत्युक्तय आकाशभाषितैराशङ्कितोत्तरत्वेन भवन्ति । अस्पष्टत्वाच्च वीरशृङ्गारौ सौभाग्यशौर्योपवर्णनया सूचनीयौ ।

लास्याङ्गानि—

गेयं पदं स्थितं पाठ्यमासीनं पुष्पगण्डिका ।

कैशिक्येति—नाटिका यथा चतुर्भिरङ्कैर्युक्ता भवति तथोक्तैः कैशिक्यङ्गैरपि चतुर्भिर्युक्ता भवतीत्यर्थः ॥ ४८ ॥

आशङ्कितोत्तरत्वेन नाम ' किमुक्तम् अहमत्रास्मीति ' इत्येवम्, तदेतद्भाणे द्रष्टव्यम् । सौभाग्यवर्णनेन शृङ्गारः शौर्यवर्णनेन च वीरः सूचनीय.—अस्पष्टत्वात्=शृङ्गारवीरप्रधानचरित्रस्याऽदर्शनाद्भाणे ॥ ५०–५१ ॥

लास्याङ्गाना लक्षणानि यथा—

गेयपदम्—" तन्त्रीभाण्ड पुरस्कृत्योपविष्टस्यासने पुरः ।
शुष्कगानं गेयपदम्, स्थितपाठ्य तदुच्यते ॥
स्थितपाठ्यम्—मदनोत्तापिता यत्र पठति प्राकृतं स्थिता, ॥
आसीनम्—निखिलातोद्यरहितं शोकचिन्तान्विताऽबला ।
सुप्रसारितगात्रं यदासीदाऽऽसीनमेव तत्, ॥
पुष्पगण्डिका—आतोद्यमिश्रितं गेयं छन्दासि विविधानि च ।
स्त्रीपुंसयोर्विपर्यासचेष्टितं पुष्पगण्डिका, ॥

प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ॥ ५२ ॥
उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम् ॥ ५३ ॥

शेषं स्पष्टमिति ।

अथ प्रहसनम्—

तद्वत्प्रहसनं त्रेधा शुद्धवैकृतसंकरैः ।

तद्वदिति भाणवद्वस्तुसंधिसंध्यङ्गलास्याङ्गानामतिदेशः ।

तत्र शुद्धं तावत्—

पाखण्डिविप्रप्रभृतिचेटचेटीविटाकुलम् ॥ ५४ ॥
चेष्टितं वेषभाषाभिः शुद्धं हास्यवचोन्वितम् ।

पाखण्डिनः शाक्यनिर्ग्रन्थप्रभृतयः विप्राश्चात्यन्तमृजवः जातिमात्रोपजीविनो वा प्रहसनाङ्गिहास्यविभावा, तेषां च यथास्वव्यापारोपनिबन्धनं चेटचेटीव्यवहारयुक्तं शुद्धं प्रहसनम् ।

विकृतं तु—

कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैः ॥ ५५ ॥

प्रच्छेदकः—अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरस्सरं गानं स्त्रियाः प्रच्छेदको मतः ॥
त्रिगूढम्—स्त्रीवेषधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ॥
सैन्धवम्—कश्चन भ्रष्टसंकेतः सुव्यक्तकरणान्वितः ।
प्राकृतं वचनं वक्ति यत्र तत् सैन्धवं विदुः ॥
द्विगूढम्—चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ॥
उत्तमोत्तमकम्—द्विगूढम्, रसभावाढ्यमुत्तमोत्तमकं पुनः ॥
उक्तप्रत्युक्तम्—कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ।
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ॥
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥ " इति ।
अन्यत् स्पष्टं साहित्यदर्पणे द्रष्टव्यम् ॥ ५३ ॥
प्रहसनाङ्गीति-प्रहसनेऽङ्गिभूतहास्यस्य पाखण्ड्यादयो विभावा इत्यर्थः ॥ ५४ ॥

---

१ "प्रहसनम्" इति पाठान्तरम्

विकृतम्, संकराद्वीथ्या संकीर्णं धूर्तसंकुलम् ।

कामुकादयो भुजङ्गचारभटाद्याः तद्वेषभाषादियोगिनो यत्र पण्डकञ्चुकितापसवृद्धादयस्तद्विकृतम्—स्वस्वरूपप्रच्युतविभावत्वात्, वीथ्यङ्गैस्तु संकीर्णत्वात् संकीर्णम् ।

रसस्तु भूयसा कार्यः षड्विधो हास्य एव तु ॥ ५६ ॥

इति स्पष्टम् ।

अथ डिमः—

डिमे वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ।
नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ॥ ५७ ॥
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।
रसैरहास्यशृङ्गारैः षड्भिर्दीप्तैः समन्वितः ॥ ५८ ॥
मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि ॥ ५९ ॥
चतुरङ्कश्चतुःसंधिर्निर्विमर्शो डिमः स्मृतः ।

डिम संघात इति नायकसंघातव्यापारात्मकत्वाड्डिमः, तत्रेतिहासप्रसिद्धमितिवृत्तम्, वृत्तयश्च कैशिकीवर्जास्तिस्र, रसाश्च वीररौद्रबीभत्साद्भुतकरुणभयानकाः षट्, स्थायी तु रौद्रो न्यायप्रधानः, विमर्शरहिता मुखप्रतिमुखगर्भनिर्वहणाख्याश्चत्वारः संधयः साङ्गाः, मायेन्द्रजालाद्यनुभावसमाश्रयाः (यः) । शेषं प्रस्तावनादि नाटकवत् । एतच्च—

" इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ।
ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥"

इति भरतमुनिना स्वयमेव त्रिपुरदाहेतिवृत्तस्य तुल्यत्वं दर्शितम् ।

अथ व्यायोगः—

ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ॥ ६० ॥
हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः ।

---

वीरादीनां षण्णां रसानां स्वरूपेणैव दीप्तत्वं विज्ञेयम् ॥ ५८ ॥
" डिम संघाते " इतिप्रकृतिभूतधातुनिर्देशः ।
तुल्यत्वम्=डिमेतिवृत्ततुल्यत्वम् ॥ ६० ॥

रसस्तु करुणः स्थायी नेतारः प्राकृता नराः ।
भाणवत्संधिवृत्त्यङ्गैर्युक्तः स्त्रीपरिदेवितैः ॥ ७१ ॥
वाचा युद्धं विधातव्यं तथा जयपराजयौ ।

उत्सृष्टिकाङ्क इति नाटकान्तर्गताङ्कव्यवच्छेदार्थम् । शेषं प्रतीतमिति ।
अथेहामृग —

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसंधिमत् ॥ ७२ ॥
नरदिव्यावनियमान्नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत् ॥ ७३ ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किंचित्किंचित्प्रदर्शयेत् ॥ ७४ ॥
संरम्भं परमानीय युद्धं व्याजान्निवारयेत् ।
वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः ॥ ७५ ॥

मृगवदलभ्या नायिका नायकोऽस्मिन्नीहते इतीहामृग. । ख्यातारव्यातं वस्तु, अन्त्य =प्रतिनायको विपर्यासाद्विपर्ययज्ञानादयुक्तकारी विधेय । स्पष्टमन्यत् ।

इत्थं विचिन्त्य दशरूपकलक्ष्ममार्ग-
मालोक्य वस्तु परिभाव्य कविप्रबन्धान् ।
कुर्यादयत्नवदलङ्कृतिभिः प्रबन्धं
वाक्यैरुदारमधुरैः स्फुटमन्दवृत्तैः ॥ ७६ ॥

॥ इति धनञ्जयकृतदशरूपकस्य तृतीय. प्रकाश. समाप्त. ॥
स्पष्टम् ॥

॥ इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके रूपक-
लक्षणप्रकाशो नाम तृतीय· प्रकाश· समाप्तः ॥

अनेनिवृत्तं प्रख्यातमेवोपनिबद्धव्यं तस्य प्रपञ्च =विस्तरस्तु कविना स्वबुद्ध्या कर्तव्य । जयपराजयावपि तथा=वाचैव विधातव्यौ । स्पष्टमन्यत् ।
मिश्रमितस्य ख्याताख्यातमित्यर्थ· ॥ ७०—७२ ॥
अन्त्य=प्रतिनायकस्य । अत्र च स्त्रीरेकाश्रयत्वेन शृङ्गाराभासत्वं विशेयम् ॥ ७४॥
अयत्नवत्=अनायासेन=अक्लिष्टमित्यर्थ, क्लिष्टरचनायामाभावलम्भनात् । स्फुटे=स्पष्टे, मन्दे=सरले, वृत्ते=छन्दांसि । स्पष्टमन्यत् ॥ ७६ ॥
॥ इति सप्रभोपदशरूपकतृतीयप्रकाशस्य प्रभाख्यव्याख्या समाप्ता ॥

अथ

## चतुर्थः प्रकाशः

अथेदानीं रसभेदः प्रदर्श्यते—

**विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।**
**आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः ॥ १ ॥**

वक्ष्यमाणस्वभावैर्विभावानुभावव्यभिचारिसात्त्विकैः काव्योपात्तैरभिनयोपदर्शितैर्वा श्रोतृप्रेक्षकाणामन्तर्विपरिवर्तमानो रत्यादिर्वक्ष्यमाणलक्षण. स्थायी स्वादगोचरताम्=निर्भरानन्दसंविदात्मतामानीयमानो रसः, तेन रसिकाः सामाजिकाः, काव्यं तु तथाविधानन्दसंविदुन्मीलनहेतुभावेन रसवद् आयुर्घृतमित्यादिव्यपदेशवत् ।

तत्र विभावः—

**ज्ञायमानतया तत्र विभावो भावपोषकृत् ।**
**आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा ॥ २ ॥**

'एवमयम्' 'एवमियम्' इत्यतिशयोक्तिरूपकाव्यव्यापाराहितविशिष्टरूपतया ज्ञायमानो विभाव्यमान. सन्नालम्बनत्वेनोद्दीपनत्वेन वा यो नायकादिरऽभिमतदेशकालादिर्वा स विभाव. यदुक्तम्—"विभाव इति विज्ञातार्थ

चतुर्थप्रकाशमारभते—विभावैरित्यादिना ।

स्वाद्यत्वम्=पुष्टावस्थाम् ।

निर्भरेति—निर्भर आनन्दो यत्र संविदि—ज्ञाने तदात्मतां विपुलानन्दमयज्ञानस्वरूपतामितियावत् । तेनेति—तादृशसंविदात्मकरसस्य चेतने एव संभवात् सामाजिका एव रसिका इत्यर्थ । यथाऽऽयुर्वृद्धिहेतुत्वेन घृते आयुष्ट्वमुपचर्यते 'आयुर्घृतम्' इति तथा काव्यस्य तथाविधानन्दसंविद —आनन्दात्मकज्ञानस्वरूपरसस्योन्मीलनहेतुभावेन=उन्मीलनहेतुत्वेन=उद्बोधहेतुत्वेन काव्ये रसवत्त्वमुपचर्यते 'रसवत् काव्यम्' इत्याह—काव्यमिति ॥ १ ॥

एवमिति—'अयं काम एव' 'इय रतिरेव' एतादृशो योऽतिशयोक्त्यादिरूप· काव्यव्यापारस्तेनाहित सम्पादित यद् विशिष्टरूपं कामादिरूप तादृशविशिष्टरूपतया ज्ञायमान । विभाव्यमान इत्यस्य ज्ञायमान इति व्याख्या । आलम्बनत्वेन ज्ञायमानो नायकादिरालम्बनविभाव, उद्दीपनत्वेन ज्ञायमानोऽभिमतदेश कालचन्द्रादिरुद्दीपनविभाव । विभावपदस्य ज्ञायमानार्थकत्वे प्रमाणमाह—यदु-

अस्त्रीनिमित्तसंग्रामो जामदग्न्यजये यथा ॥ ६१ ॥

एकाहाचरितैकाङ्को व्यायोगो बहुभिर्नरैः ।

व्यायुध्यन्तेऽस्मिन्बहवः पुरुषा इति व्यायोगः, तत्र डिमवद्रसाः षड् हास्यशृङ्गाररहिताः । वृत्त्यात्मकत्वाच्च रसानामवचनेऽपि कैशिकीरहितेतरवृत्तित्वं रसवदेव लभ्यते । अस्त्रीनिमित्तश्चात्र संग्रामो यथा परशुरामेण पितृवधकोपात्सहस्रार्जुनवधः कृतः । शेषं स्पष्टम् ।

अथ समवकारः—

कार्यं समवकारेऽपि आमुखं नाटकादिवत् ॥ ६२ ॥

ख्यातं देवासुरं वस्तु निर्विमर्शास्तु संधयः ।

वृत्तयो मन्दकैशिक्यो नेतारो देवदानवाः ॥ ६३ ॥

द्वादशोदात्तविख्याताः फलं तेषां पृथक्पृथक् ।

बहुवीररसाः सर्वे यद्वदम्भोधिमन्थने ॥ ६४ ॥

अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः ।

द्विसंधिरङ्कः प्रथमः कार्यो द्वादशनालिकः ॥ ६५ ॥

चतुर्द्विनालिकावन्त्यौ नालिका घटिकाद्वयम् ।

वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ॥ ६६ ॥

नगरोपरोधयुद्धे वाताग्न्यादिकविद्रवाः ।

धर्मार्थकामैः शृङ्गारो नात्र बिन्दुप्रवेशकौ ॥ ६७ ॥

वीथ्यङ्गानि यथालाभं कुर्यात्प्रहसने यथा ।

रसवदेवेति—यथा हास्यशृङ्गाररहिताः षडेव वीरादयो रसा अत्र कार्या एव कैशिकीवृत्तिराहित्यस्याऽवचनेपि कैशिकीभिन्नवृत्तयः कार्या इति लभ्यते किं च कैशिक्याः शृङ्गारप्रधानत्वाच्छृङ्गाररसनिवृत्त्या कैशिक्या अपि निवृत्तिर्लभ्यते इत्यर्थः ॥ ६१ ॥

मन्दकैशिक्यः—मन्दा अल्पा कैशिकी यासु ता मन्दकैशिक्यः ॥ ६३ ॥

वस्तुस्वभावकृतो दैवकृतोऽरिकृतश्चेति त्रयः कपटाः । नगरोपरोधकृतो युद्धकृतो वाताग्न्यादिकृतश्चेति त्रयो विद्रवाः—उपद्रवाः । प्रत्येककारणं प्रथमप्रकरणान्ते द्रष्टव्यम् । मुखप्रतिमुखे प्रथमाङ्के , गर्भो द्वितीयाङ्के, निर्वहणं तृतीयाङ्के ।

१ " नाडिकः " इत्यपि पाठः । २ " नाडिका " इत्यपि पाठः ।

समवकीर्यन्तेऽस्मिन्नर्था इति समवकारः। तत्र नाटकादिवदामुखमिति समस्तरूपकाणामामुखप्रापणम्। विमर्शवर्जिताश्चत्वारः संधयः, देवासुरादयो द्वादश नायकाः तेषां च फलानि पृथक्पृथग्भवन्ति यथा समुद्रमन्थने वासुदेवादीनां लक्ष्म्यादिलाभाः, वीरश्चाङ्गी अङ्गभूताः सर्वे रसाः, त्रयोऽङ्काः तेषां प्रथमो द्वादशनालिकानिर्वृत्तेतिवृत्तप्रमाणः यथासंख्यं चतुर्द्विनालिकावन्त्यौ, नालिका च घटिकाद्वयम्। प्रत्यङ्कं च यथासंख्यं कपटाः तथा नगरोपरोधयुद्धवाताग्न्यादिविद्रवाणां मध्य एकैको विद्रवः कार्यः। धर्मार्थकामशृङ्गाराणामेकैकः शृङ्गारः प्रत्यङ्कमेव विधातव्यः। वीथ्यङ्गानि च यथालाभं कार्याणि। बिन्दुप्रवेशकौ नाटकोक्तावपि न विधातव्यौ। इत्ययं समवकारः।

अथ वीथी—

वीथी तु कैशिकीवृत्तौ संध्यङ्गाङ्कैस्तु भाणवत् ॥ ६८ ॥
रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम्।
युक्ता प्रस्तावनाख्यातैरङ्गैरुद्धात्यकादिभिः ॥ ६९ ॥
एवं वीथी विधातव्या द्व्येकपात्रप्रयोजिता।

वीथीवद्वीथी मार्गः अङ्गानां पङ्क्तिर्वा, भाणवत्कार्या। विशेषस्तु रसः शृङ्गारोऽपरिपूर्णत्वाद्भूयसा सूच्यः, रसान्तराण्यपि स्तोकं स्पर्शनीयानि। कैशिकी वृत्ती रसौचित्यादेवेति। शेषं स्पष्टम्।

अथाङ्कः—

उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत् ॥ ७० ॥

सर्वेषा नायकानामर्थाः=प्रयोजनानि समवकीर्यन्ते=एकत्रीभवन्त्यत्रेति समवकार इत्यर्थः।

समस्तरूपकाणाम्=समस्तरूपकेषु आमुखप्रापणम्=प्रस्तावनासंबन्धो दर्शितः। तेषामङ्कानां मध्ये प्रथमोऽङ्को द्वादशनालिकाभिर्निर्वर्त्यः=संपादनीय इतिवृत्तस्य प्रमाणं यस्य यस्मिन् वा तादृशः कर्तव्य इत्यर्थः। अन्त्यौ=द्वितीयतृतीयौ। धर्मपत्न्या सह शृङ्गारो धर्मशृङ्गारः, लोभवशेन प्रवृत्त्याऽर्थशृङ्गारः, परकीयादिना कामशृङ्गार इतिविवेकः ॥ ६५–६७ ॥

युक्तेति–प्रस्तावनायाः ख्यातैः=उक्तैरुद्घात्यकादिभिरङ्गैर्युक्ता वीथी कर्तव्येत्यन्वयः ॥ ६९ ॥ भूयसा=विशेषतः।

उत्सृष्टिकाङ्केति–"नाटक समवकारणम्" इत्युद्देशवाक्ये य उक्तोऽङ्कस्तस्मिन्।

इति" ताश्च यथास्वं यथावसरं च रसेषूपपादयिष्यामः । अमीषां चानपेक्षितबाह्यसत्त्वानां शब्दोपधानादेवाऽऽसादिततद्भावानां सामान्यात्मना स्वस्वसम्बन्धित्वेन विभावितानां साक्षाद्भावकचेतसि विपरिवर्तमानानामालम्बनादिभाव इति न वस्तुशून्यता । तदुक्तं भर्तृहरिणा—

"शब्दोपहितरूपांस्तान्बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन्साधनत्वेन मन्यते ॥" इति ।

षट्सहस्रीकृताप्युक्तम्—"एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते" इति ।

तत्रालम्बनविभावो यथा—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकनिधिः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥"

उद्दीपनविभावो यथा—

"अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः
परिणतविमलिम्नि व्योम्नि कर्पूरगौरः ।
ऋजुरजतशलाकास्पर्धिभिर्यस्य पादै-
र्जगदमलमृणालीपञ्जरस्थं विभाति ॥"

**अनुभावो विकारस्तु भावसंसूचनात्मकः ।**

ताँश्चेति । तान् विभावान् । यथास्वम्—यथाक्रमेण निर्देशक्रमेणेतियावत् । अमीषाम्—विभावानाम् । चन्द्रादिविभावानां कृष्णपक्षादावपि काव्यलक्षणशब्दोपाधिवशात् सद्भावो भवतीत्याह—अनपेक्षितेति । सामान्यात्मनाम्—साधारणीभूतानाम् । स्वपदं रसिकपरं रसपरं वा । विभावितानाम्—विज्ञातानाम् । आलम्बनादिभावः—आलम्बनादित्वम् । उक्तभावादीनां यदि भावकचेतसि वर्तमानत्वं न स्यात्तदा स्यादपि वस्तुशून्यता न चैवमस्तीत्यर्थः, पदार्थस्य बौद्धत्वेऽपि वस्तुशून्यताया अस्वीकारात् । उक्ते प्रमाणमाह—तदुक्तमिति । साधनत्वेन—कर्मकारकत्वादिना बध्यत्वादिनेतियावत् । एभ्यः—विभावेभ्यः । सामान्यगुणयोगेन साधारणीकृतेभ्य इत्यर्थः । साधारणीकरणं च 'न ममैवैते' इत्यादिना काव्यप्रकाशे द्रष्टव्यम् ॥ २ ॥

अनुभाव इति—रत्यादिभावस्य संसूचनात्मकः संसूचको विकारः—भ्रूविक्षेपादिरनुभाव इत्युच्यते ।

स्थायिभावानऽनुभावयन्त सामाजिकान् सभ्रूविक्षेपकटाक्षादयो रस-पोषकारिणोऽनुभावा, एते चाभिनयकाव्ययोरप्यनुभावयता साक्षाद्भावकानामनुभवकर्मतयानुभूयन्त इत्यनुभवनमिति चानुभावा रसिकेषु व्यपदिश्यन्ते। विकारी भावससूचनात्मक इति तु लौकिकरसापेक्षया इह तु तेषा कारणत्वमेव। यथा ममैव—

'उज्जृम्भाननमुल्लसत्कुचतट लोलभ्रमद्भ्रूलत
स्वेदाम्भ स्नपिताङ्गयष्टिविगलद्व्रीड सरोमाञ्चया।
धन्य कोऽपि युवा स यस्य वदने व्यापारिता सस्पृह
मुग्धे दुग्धमहाब्धिफेनपटलप्रख्या कटाक्षच्छटा'॥'

इत्यादि यथारसमुदाहरिष्याम।

हेतुकार्यात्मनोः सिद्धिस्तयोः संव्यवहारतः॥ ३॥

तयोर्विभावानुभावयोर्लौकिकरस प्रति हेतुकार्यभूतयो सव्यवहारादेव सिद्धत्वान्न पृथग्लक्षणमुपयुज्यते तदुक्तम्—"विभावानुभावौ लो-

स्थायीति–सामाजिकान् प्रति रत्यादिस्थायिभावानऽनुभावयन्तो भ्रूविक्षेपा दयोऽनुभावा विज्ञेया। एते च भ्रूनिक्षेपादयो ये भावका=रसिका अनुभवक र्तारस्तेषां साक्षादनुभवकर्मतयाऽनुभूयन्ते इति व्युत्पत्त्या अनुभवनम्–रत्यादेरनु पश्चाद्भवन्तीति व्युत्पत्त्या चाभिनयकाव्ययोरनुभावा इति व्यपदिश्यन्ते। "अभि नयकाव्ययो" इत्यस्य "अनुभावयताम्" इत्यनेन वान्वय। भ्रूविक्षेपा दीनां यद् विकारत्वम्=कार्यत्वमुच्यते तल्लौकिकरसापेक्षया लौकिकरसे सत्येव भ्रूविक्षेपादीनां लोके सभवात्, इह=अलौकिकरसे तु तेषाम्=भ्रूविक्षेपादीना कारणत्वमेव–अभिनयकाव्ययोरनुभावादिभिर्विना रसोत्पत्तेरसभवात् "विभा वानुभावव्यभिचारिसयोगाद् रसनिष्पत्ति।" इति सिद्धान्तात्। लोके नायिका नायकयोर्य शृङ्गारादि स लौकिकरसस्तेन लौकिकरसेन भ्रूविक्षेपादयो जायन्ते इति तेषा तत्र कार्यत्वम्, अभिनयकाव्याभ्या य खलु सामाजिकैरास्वाद्यते सोऽलौकिकरस स त्वनुभावादिक विना न सपद्यते इति तत्र तेषां कारणत्व मिति विवेक।

तयोरिति–लौकिकरसे आलम्बनोद्दीपनविभावयोर्हेतुत्वमनुभावाना च कार्य त्वमस्तीति तादृशहेतुकार्यभूतयोर्विभावानुभावयो संव्यवहारादेव=लोकव्यवहारा देव सिद्धत्वात्=ज्ञातत्वात् तयो पृथग् लक्षण नोच्यते–अत्रालौकिकविभावानु भावयोरेव लक्षणस्य वक्तव्यत्वात् किं चाऽलौकिकविभावानुभावसद्भावेन

वसंसिद्धौ लोकयात्रानुगामिनौ लोकस्वभावोपगतत्वाच्च न पृथग्लक्षणमुच्यते" इति ।

अथ भावः—

**सुखदुःखादिकैर्भावैर्भावस्तद्भावभावनम् ।**

अनुकार्याश्रयत्वेनोपनिबध्यमानैः सुखदुःखादिरूपैर्भावैस्तद्भावस्य भावकचेतसो भावनं वासनं भावः तदुक्तम्—"अहो ह्यनेन रसेन गन्धेन वा सर्वमेतद्भावितं वासितम्" इति ।

यत्तु "रसान्भावयन्भावः" इति "कवेरन्तर्गतं भावं भावयन्भावः" इति च तद् अभिनयकाव्ययोः प्रवर्तमानस्य भावशब्दस्य प्रवृत्तिनिमित्तकथनम् । ते च स्थायिनो व्यभिचारिणश्चेति वक्ष्यमाणाः ।

**पृथग्भावा भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः ॥ ४ ॥**

**सत्त्वादेव समुत्पत्तेस्तच्च तद्भावभावनम् ।**

---

लौकिकविभावानुभावौ विज्ञेयाविति न पृथग् लक्षणवचनापेक्षा । पृथग्लक्षणानुपयोगे प्रमाणमाह—तदुक्तमिति । लोकयात्रानुगामिनौ=लोकव्यवहारानुकूलौ । स्पष्टमन्यत् ॥ ३ ॥

अनुकार्याश्रयत्वेन=श्रीरामादिगतत्वेन । वासनम् तदापत्ति—दुःख्यादिभवनम् तद्भावस्येति भावक( रसिक )चेतसो विशेषणम् । तद्भावस्य=तदेकतानस्य, भावनम्—तदेकतानता ।

ननु त्वया हि भावकचेतसो भावनाद्भावत्व भावस्योक्तं प्राचीनैस्तु " रसान् भावयन् भाव " " कवेरन्तर्गतं भावं भावयन् भाव " इत्येव रसभावकत्वेन कविहृदयभावभावकत्वेन च भावस्य भावत्वमुक्तमिति प्राचीनैर्विरोध प्राप्त इत्याशङ्क्याह—यत्त्विति, मया हि रसिकसमवेतभावपदस्यार्थ उक्त , प्राचीनानां तत् भावपदार्थाभिधान तु ' भावात्मकं काव्यम् ' ' भावात्मकोऽभिनय ' इत्येवं काव्याभिनययो प्रवर्तमानस्य ( गौणस्य ) भावस्यास्तीति विषयभेदान्न विरोध । काव्यस्य रसभावकत्वम् अभिनयस्य च कविहृदयभावभावकत्वं सुस्पष्टमेव ।

ते=भावा ।

पृथगिति—वक्ष्यमाणा अश्रुपातादयोऽप्यनुभावा अपि साहित्यशास्त्रसङ्केतेन सात्त्विकभावा इत्युच्यन्ते तेषां सत्त्वात् समुत्पद्यमानत्वात् तत्=सत्त्व च तद्भावभावनम्=तद्भावस्य—भावकचेतस सुखदुःखादिभिर्भावन वासनमित्यन्वय ।

परगतदुःखहर्षादि भावनायामत्यन्तानुकूलान्त करणत्वं सत्त्वं यदाह—"सत्त्वं नाम मन प्रभवं तच्च समाहितमनस्त्वादुत्पद्यते, एतदेवास्य सत्त्वं यतः खिन्नेन प्रहर्षितेन चाश्रुरोमाञ्चादयो निर्वर्त्यन्ते, तेन सत्त्वेन निर्वृत्ताः सात्त्विकास्त एव भावास्तत उत्पद्यमानत्वादश्रुप्रभृतयोऽपि भावा भावसंसूचनात्मकविकाररूपत्वाच्चानुभावा इति द्वैरूप्यमेषाम् । " ( इति )

ते च—

स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू ॥ ५ ॥
अश्रुवैस्वर्यमित्यष्टौ, स्तम्भोऽस्मिन्निष्क्रियाङ्गता ।
प्रलयो नष्टसंज्ञत्वम्, शेषाः सुव्यक्तलक्षणाः ॥ ६ ॥

यथा—

वेवेइ १ सेअदवदनी २ रोमञ्चिअ गत्तिए ववइ ३।
विलुलुइ तु वलअ एहु बाहोअल्लीए रणेत्ति ॥
मुहऊ सामलि होई ४ खणे विमुच्छइ विअग्धेण ५ ।
मुद्धा मुहअल्ली तुअ पेम्मेण सावि ण धिज्जइ ॥ "

अथ व्यभिचारिण[१], तत्र सामान्यलक्षणम्—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥ ७ ॥

---

मन.प्रभवम्=मनोविकारविशेष । तत्-सत्त्वम्, तादृशसात्त्विकमनोविकार एकाग्रमनसो जायते । निर्वृत्ता -सजाता । सात्त्विकास्त एव भावा इति सात्त्विकभावा इत्यर्थ । तत् इति—तत =सत्त्वादुत्पद्यमानत्वादश्रुप्रभृतयोऽपि भावा भावसूचनात्मकविकाररूपत्वादनुभावा अप्युच्यन्ते इत्येषाम्—सात्त्विकाना द्वैरूप्यम् भावत्वमनुभावत्व च सिद्धम् ॥ ४ ॥

ते=सात्त्विकभावा । स्तम्भलक्षणमाह—स्तम्भ इति । प्रलयलक्षणमाह—प्रलय इति, नष्टसज्ञत्वम्—मूर्छा । वैस्वर्यम्=भावविशेषेण गद्गदकण्ठता । स्पष्टमन्यदित्याह—शेषा इति ॥ ६ ॥

---

१ " वेपते १ स्वेदवदना २ रोमाञ्च गात्रे वपति ३ ।
विलोलस्ततो वलयो लघु बाहुवल्ल्या रणति ॥
मुख श्यामल भवति ४ क्षण विमूर्च्छति विदग्धेन ५ ।
मुग्धा मुखवल्ली तव प्रेम्णा सापि न धैर्य करोति " इति च्छाया ।

यथा वारिधौ सत्येव कल्लोला उद्भवन्ति विलीयन्ते च तद्वदेव रत्यादौ स्थायिनि सत्येवाविर्भावतिरोभावाभ्यामाभिमुख्येन चरन्तो वर्तमाना निर्वेदादयो व्यभिचारिणो भावाः । ते च—

निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्यौग्र्यचिन्ता-
त्रासेर्ष्यामर्षगर्वाः स्मृतिमरणमदाः सुप्तनिद्राविबोधाः ।
व्रीडापस्मारमोहाः सुमतिरलसतावेगतर्कावहित्था
व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥८॥

तत्र निर्वेदः—

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ॥ ९ ॥

तत्त्वज्ञानान्निर्वेदो यथा—

"प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संप्रीणिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥"

आपदो यथा—

"राज्ञो विपद्बन्धुवियोगदुःखं देशच्युतिर्दुर्गममार्गखेदः ।
आस्वाद्यतेऽस्याः कटुनिष्फलायाः फलं मयैतच्चिरजीवितायाः ॥"

ईर्ष्यातो यथा—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटाञ्जीवत्यहो रावणः ।
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनपरैः पीनैः किमेभिर्भुजैः ॥"

वीरशृङ्गारयोर्व्यभिचारि निर्वेदो यथा—

"ये बाहवो न युधि वैरिकठोरकण्ठ-
पीठोच्छलद्रुधिरराजिविराजितांसाः ।
नापि प्रियापृथुपयोधरपत्रभङ्ग-
संक्रान्तकुङ्कुमरसाः खलु निष्फलास्ते ॥"

---

तत्र-निर्वेदे चिन्तादयो भवन्तीत्यन्वयः ।

आत्मानुरूपं रिपुं रमणीं वाऽलभमानस्य निर्वेदादियुक्तिः । एवं रसान्तराणामप्यङ्गभाव उदाहार्यः ।

रसानङ्गः स्वतन्त्रो निर्वेदो यथा—

"कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादतः श्रूयताम् ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे ॥"

विभावानुभावरसाङ्गाऽनङ्गभेदादऽनेकशाखो निर्वेदो निदर्शनीयः ।

अथ ग्लानिः—

**रत्याद्यायासतृट्क्षुद्भिर्ग्लानिर्निष्प्राणतेह च ।**
**वैवर्ण्यकम्पानुत्साहक्षामाङ्गवचनक्रियाः ॥ १० ॥**

निधुवनकलाभ्यासादिश्रमतृट्क्षुद्वमनादिभिर्निष्प्राणतारूपा ग्लानिः अस्या च वैवर्ण्यकम्पानुत्साहादयोऽनुभावाः ।

यथा माघे—

" लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा
रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः ।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः "

शेषं निर्वेदवदूह्यम् ।

अथ शङ्का—

**अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।**
**कम्पशोषाभिवीक्षादिरत्र वर्णस्वरान्यता ॥ ११ ॥**

---

रसान्तराणामिति पद्यद्वयेर्यो निरूपितत्व तथा च निर्वेदे रसान्तरनिरूपिताङ्ग-भाव एवरीत्या स्वयमुदाहार्य इत्यर्थ ।

" कस्त्वभो " इत्यत्र कस्यचिदपि रसस्याऽप्रकाशनाद् निर्वेदस्यैव प्राधान्य रसाऽनङ्गत्वं च विशेषम् ।

विभावेति—विभावानुभावरसानामङ्गभूतः अनङ्गभूतश्च निर्वेद इत्यनेकप्रकारो भवतीत्यर्थ. ॥ ९ ॥

निधुवनम्=सुरतम् । निष्प्राणता=श्रान्तिरितियावत् ।

शेषम्=रसाद्यङ्गत्वमनङ्गत्व च ।

तत्र परकीयोर्यथा रत्नावल्याम्—

" ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ "

स्वदुर्नयाद्यथा वीरचरिते—

" दूराद्दवीयो धरणीधराभं यस्ताटकेयं तृणवद्व्यधूनोत् ।
हन्ता सुबाहोरपि ताडकारिः स राजपुत्रो हृदि बाधते माम् ॥ "

अनया दिशान्यदनुसर्तव्यम् ।

अथ श्रमः—

**श्रमः खेदोऽध्वरत्यादेः स्वेदोऽस्मिन्मर्दनादयः ।**

अध्वतो यथोत्तररामचरिते—

" अलसलुलितमुग्धान्यध्वसंजातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ "

रतिश्रमो यथा माघे—

" प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ "

इत्याद्युत्प्रेक्ष्यम् ।

अथ धृतिः—

**संतोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत् ॥ १२ ॥**

ज्ञानाद्यथा भर्तृहरिशतके—

" वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ "

अन्यत्=रसाद्यङ्गत्वमनङ्गत्वं च अनुसर्तव्यम्=स्वयमुदाहार्यम् ।
अव्यग्रभोगकृत्=अव्यग्रत्वपूर्वकं भोगप्रयोजिकेतियावत् । धैर्याभावे हि व्यग्रता भवति न धैर्ये सतीति भावः ।

शक्तितो यथा रत्नावल्याम्—

" राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनपालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥ "

इत्याद्यूह्यम् ।

अथ जडता—

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥ १३ ॥

इष्टदर्शनाद्यथा—

" एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥ "

अनिष्टश्रवणाद्यथोदात्तराघवे—" राक्षसः—

तावन्तस्ते महात्मानो निहताः केन राक्षसाः ।
येषां नायकतां याताख्रिशिरःखरदूषणाः ॥

द्वितीयः—गृहीतधनुषा रामहतकेन । प्रथमः—किमेकाकिनैव । द्वितीयः अदृष्ट्वा कः प्रत्येति, पश्य तावतोऽस्मद्बलस्य—

सद्यश्छिन्नशिरःश्वभ्रमज्जत्कङ्ककुलाकुलाः ।
कबन्धाः केवलं जातास्तालोत्ताला रणाङ्गणे ॥

प्रथमः—सखे यद्येवं तदाहमेवंविधः किं करवाणि ।" इति ।

अथ हर्षः—

प्रसत्तिरुत्सवादिभ्यो हर्षोऽश्रुस्वेदगद्गदाः ।

प्रियागमनपुत्रजननोत्सवादिविभावैश्चेतःप्रसादो हर्षः तत्र चाश्रुस्वेदगद्गदादयोऽनुभावा यथा—

" आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पकलिलामासज्य दृष्टिं मुखे ।
दत्त्वा पीलुशमीकरीरकवलान्स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभारामलग्नं रजः ॥ "

" किं करवाणि " इत्यनेन जडता व्यज्यते—कर्तव्यताज्ञानविगमात् ।

प्रसत्तिः—प्रसादः ।

निर्वेदवदितरदुन्नेयम्

अथ दैन्यम्—

दौर्गत्याद्यैरनौजस्यं दैन्यं कार्ष्ण्यमृजादिमत् ॥ १४ ॥

दारिद्र्यन्यक्कारादिविभावैरनौजस्कता चेतसो दैन्यं तत्र च कृष्णतामलिनवसनदर्शनादयोऽनुभावाः यथा—

" वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्तापि नो ।
यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां सुतवधूं श्वश्रूश्चिरं रोदिति ॥ "

शेषं पूर्ववत् ।

अथौग्र्यम्—

दुष्टेऽपराधदौर्मुख्यक्रौर्यैश्चण्डत्वमुग्रता ।
तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥ १५ ॥

यथा वीरचरिते—" जामदग्न्यः—

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान् ।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥ "

अथ चिन्ता—

ध्यानं चिन्तेहितानाप्तेः शून्यताश्वासतापकृत् ।

यथा—

" पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः
कुर्वन्त्या हरहासहारि हृदये हारावलीभूषणम् ।
बाले बालमृणालनालवलयालङ्कारकान्ते करे
विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते ॥ "

यथा वा—

" अस्तमितविषयसङ्गा मुकुलितनयनोत्पला बहुश्वसिता ।

इतरत्=पुत्रजन्मादिजन्यो हर्षो निर्वेदवद् उन्नेय =स्वयमुदाहार्य ।
शेषम्-रसाङ्गानङ्गादि, पूर्ववत्=स्वयमुदाहार्यमित्यर्थ ॥ १४ ॥

ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव ॥ "

अथ त्रासः—

**गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पितादयः ॥ १६ ॥**

यथा माघे—

" त्रस्यन्ती चलशफरीविघट्टितोरू-
वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः ॥"

अथासूया—

**परोत्कर्षाक्षमाऽसूया गर्वदौर्जन्यमन्युजा ।**
**दोषोक्त्यवज्ञे भ्रुकुटिमन्युक्रोधेङ्गितानि च ॥ १७ ॥**

गर्वेण यथा वीरचरिते—

" अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यका ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते ॥"

दौर्जन्याद्यथा—

" यदि परगुणा न क्षम्यन्ते यतस्व गुणार्जने
नहि परयशो निन्दाव्याजैरलं परिमार्जितुम् ।
विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो
दिनकरकरान् पाणिच्छत्रैर्नुदञ्छ्रममेष्यसि ॥ "

मन्युजा यथामरुशतके—

"पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः ।
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः ।
स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥

---

योगाभियुक्तेव=योगिनीव ॥ १५ ॥
त्रास=भयम् । मनःक्षोभः=मनसो भयप्रवणता ।
दोषोक्त्यादयोऽनुभावा असूयायां विज्ञेयाः । अत्रेति शेषः ।

ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा
मनस्विन्या रोषप्रणयरभसाद्गद्गदगिरा ।
अहो चित्रे चित्रं स्फुटमिति निगद्याश्रुकलुषं
रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥"

अथामर्षः—

अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥ १८ ॥

यथा वीरचरिते—

" प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥"

यथा वा वेणीसंहारे—

"युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥"

अथ गर्वः—

गर्वोऽभिजनलावण्यबलैश्वर्यादिभिर्मदः ।
कर्माण्याधर्षणावज्ञा सविलासाङ्गवीक्षणम् ॥ १९ ॥

यथा वीरचरिते—

"मुनिरयमथ वीरस्तादृशस्तत्प्रियं मे
विरमतु परिकम्पः कातरे क्षत्रियासि ।
तपसि विततकीर्तेर्दर्पकण्डूलदोष्णः
परिचरणसमर्थो राघवः क्षत्रियोऽहम् ॥"

यथा वा तत्रैव—

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥"

---

अभिनिविष्टता=अभिनिवेशः, असहनमितियावत् ॥ १८ ॥
कर्माणीति–गर्वेणाऽऽधर्षणाऽवज्ञा सविलासं स्वाङ्गवीक्षणं च जायते ॥ १९ ॥

अथ स्मृति.—

सदृशज्ञानचिन्ताद्यैः संस्कारात्स्मृतिरत्र च ।
ज्ञातत्वेनार्थभासिन्यां भ्रूसमुन्नयनादयः ॥ २० ॥

यथा—

"मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावण-
मा: ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥"

यथा वा मालतीमाधवे—"माधवः—मम हि प्राक्तनोपलम्भसंभावितात्मजन्मन संस्कारस्यानवरतप्रबोधात् प्रतीयमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसंतानस्तन्मयमिव करोति वृत्तिसारूप्यतश्चैतन्यम्—

"लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रसारघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥"

---

सदृशेति–सदृशपदार्थज्ञानादिना पूर्वमनुभूतस्य संस्कारस्योद्बोधो भवति तेनोद्बुद्धेन च संस्कारेण स्मृतिर्जायते, सा च स्मृतिर्ज्ञातत्वेन स्वविषयस्य भासिका भवतीत्यर्थ

प्राक्तनेति–प्राक्तनेनोपलम्भेन=साक्षात्कारेण संभावितम्=जातमात्मजन्म=आत्मोत्पत्तिर्यस्यैतादृशसंस्कारस्य निरन्तरप्रबोधात् प्रतीयमानः प्रतायमानो वा तद्विस-दृशैः=स्वविरुद्धैः प्रत्ययान्तरैः=ज्ञानान्तरैरतिरस्कृतप्रवाहः=अनिरुद्धः प्रियतमा-विषयकस्य स्मृतिप्रत्ययस्य=स्मृतिरूपज्ञानस्य संतानः=परम्परा ( समुदाय ) तन्मयमिव=प्रियतमामयमिव करोति चैतन्यम्=आत्मानं वृत्तिसारूप्यत इति. अन्तःकरणस्य विषयरूपेण परिणामो वृत्तिः वृत्तिसारूप्यं हि वृत्तिसदृशं पुनो भासमानस्वरूपं [illegible] अत्यन्तं [illegible] च प्रसिद्धैव, यतः प्रियास्मरणं ममात्मानं प्रियामयमिव करोति पुनः प्रियैकरूपतान्नादिति भावः । योऽयमात्मस्वरूपस्तो न केवलमिदं वचनम् । उक्तं च " वृत्तिसारूप्यमितरत्र " इति ।

अथ मरणम्—

'मरणं सुप्रसिद्धत्वादनर्थत्वाच्च नोच्यते ।

यथा—

"संप्राप्तेऽवधिवासरे क्षणमनु त्वद्वर्त्मवातायनं
वारंवारमुपेत्य निष्क्रियतया निश्चित्य किंचिच्चिरम् ।
संप्रत्येव निवेश्य केलिकुररीं सास्रं सखीभ्यः शिशो-
र्माधव्या. सहकारकेण करुणः पाणिग्रहो निर्मित. ॥"

इत्यादिवच्छृङ्गाराश्रयालम्बनत्वेन मरणे व्यवसायमात्रमुपनिबन्धनीयम् । अन्यत्र कामचारो यथा वीरचरिते—"पश्यन्तु भवन्तस्ताडकाम्—
हृन्मर्मभेदिपतदुत्कटकङ्कपत्रसंवेगतत्क्षणकृतस्फुरदङ्गभङ्गा ।
नासाकुटीरकुहरद्वयतुल्यनिर्यदुद्बुद्बुदध्वनदसृक्प्रसरा मृतैव ॥"

अथ मद—

हर्षोत्कर्षो मदः पानात्स्खलदङ्गवचोगतिः ॥ २१ ॥
निद्रा हासोऽत्र रुदितं ज्येष्ठमध्याधमादिषु ।

यथा माघे—

"हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वा कामिनेव तरुणेन मदेन ॥"

इत्यादि ।

अथ सुप्तम्—

सुप्तं निद्रोद्भवं तत्र श्वासोच्छ्वासक्रिया परम् ॥ २२ ॥

---

नोच्यते= न लक्ष्यते ।

शृङ्गाराश्रयालम्बनत्वेनेति—यमुद्दिश्य भाव प्रवर्तते स तस्य आलम्बनमित्युच्यते प्रियमुद्दिश्य मरणे हि स प्रिय एव मरणस्यालम्बनं स्यादिति प्राप्त तथा च शृङ्गारस्य य आश्रय प्रियो वा प्रिया वा तादृशालम्बनत्वेन नाम तादृशशृङ्गाराश्रयमुद्दिश्य मरणे व्यवसायमात्र प्रदर्शनीयमुक्तपद्यदिशा न तु साक्षान्मरणमपीत्यर्थ । अन्यत्र=शृङ्गारादन्यत्र तु कामचार.—स्वातन्त्र्यम्—साक्षान्मरणोपनिबन्धेऽपि न दोष ।

निद्रेति—मदेनोत्तमे निद्रा. मध्ये हास . अधमे रुदितं जायते ।

सुप्तम्=सुषुप्ति , निद्राहि वक्ष्यमाणरीत्या मनस्समीलनं सुषुप्तिपूर्वावस्थेति सुषुप्तेर्निद्रोद्भवत्वमुक्तमिति विभावनीयम् ॥ २२ ॥

यथा—

"लघुनि तृणकुटीरे क्षेत्रकोणे यवानां
नवकलमपलालस्रस्तरे सोपधाने।
परिहरति सुषुप्तं हालिकद्वन्द्वमारात्
कुचकलशमहोष्मावद्धरेखस्तुषारः ॥"

अथ निद्रा—

**मनःसंमीलनं निद्रा चिन्तालस्यक्लमादिभिः।**
**तत्र जृम्भाङ्गभङ्गाक्षिमीलनोत्स्वमतादयः ॥ २३ ॥**

यथा—

"निद्रार्धमीलितदृशो मदमन्थराणि
नाप्यर्थवन्ति न च यानि निरर्थकानि।
अद्यापि मे मृगदृशो मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥"

यथा च माघे—

"प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति।
मुहुरविशदवर्णा निद्रया शून्यशून्यां
ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥"

अथ विबोधः—

**विबोधः परिणामादेस्तत्र जृम्भाक्षिमर्दने।**

यथा माघे—

"चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥"

परिणामादेरिति—परिणामोऽवस्थान्तरप्राप्तिस्तया च निद्रापगमावस्थया विबोधो जायते इत्यभिप्रायः। "परिणामादेः" इत्यत्र 'परितापादेः' इत्यादिरूपेण पाठः समाप्यते।

१ "उत्स्वमनादयः" इति पाठान्तरम्।

संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेवं प्रतीच्छन्
वादः स्वप्नाभिदृष्टे त्वयि चकितदृशां विद्विषामाविरासीत् ॥"

इत्यादि ।

"तनुत्राणं तनुत्राणं शस्त्रं शस्त्रं रथो रथः ।
इति शुश्रुविरे विष्वगुद्भटाः सुभटोक्तयः ॥"

यथा वा—

"प्रारब्धां तरुपुत्रकेषु सहसा संत्यज्य सेकक्रिया-
मेतास्तापसकन्यकाः किमिदमित्यालोकयन्त्याकुलाः ।
आरोहन्त्युटजद्रुमांश्च वटवो वाचंयमा अप्यमी
सद्यो मुक्तसमाधयो निजवृषीष्वेवोच्चपादं स्थिताः ॥"

वातावेगो यथा—"वाताहतं वसनमाकुलमुत्तरीयम्" इत्यादि ।

वर्षजो यथा—

"देवे वर्षत्यशनपचनव्यापृता वह्निहेतो-
र्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः ।
नीव्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा
शूर्पच्छत्रस्थगितशिरसो योषितः संचरन्ति ॥"

उत्पातजो यथा—

"पौलस्त्यपीनभुजसंपदुदस्यमान-
कैलाससंभ्रमविलोलदृशः प्रियायाः ।
श्रेयांसि वो दिशतु निह्नुतकोपचिह्न-
मालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥"

अहितकृतस्त्वनिष्टदर्शनश्रवणाभ्यां तद् यथोदात्तराघवे—"चित्रमायः (ससम्भ्रमम्) भगवन् कुलपते रामभद्र परित्रायतां परित्रायताम् । (इत्याकुलतां नाटयति)" इत्यादि । पुनः "चित्रमायः—

मृगरूपं परित्यज्य विधाय विकटं वपुः ।
नीयते रक्षसानेन लक्ष्मणो युधि संशयम् ॥

रामः—

वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात्
त्रस्तश्चैष मुनिर्विरौति मनसश्चास्त्येव मे संभ्रमः ।
माहासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते
न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥"

इत्यन्तेनानिष्टप्राप्तिकृतसंभ्रमः ।

इष्टप्राप्तिकृतो यथात्रैव—"(प्रविश्य पटाक्षेपेण संभ्रान्तो वानरः) वानरः—महाराअ एदं खु पवणणन्दणागमणेन पहरिस—" इत्यादि "देवस्स हिअआणन्दजणणं विअलिदं महुवणम् ।" इत्यन्तम् ।

यथा वा वीरचरिते—

"एह्येहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्धनि चिरस्य परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥"

वह्निजो यथामरुशतके—

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥"

यथा वा रत्नावल्याम्—

"विरम विरम वह्ने मुञ्च धूमाकुलत्वं
प्रसरयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाऽहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥"

करिजो यथा रघुवंशे—

"स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥"

करिग्रहणं व्यालोपलक्षणार्थं तेन व्याघ्रशूकरवानरादिप्रभवा आवेगा व्याख्याताः ।

अथ वितर्कः—

तर्को विचारः संदेहाद्भ्रूशिरोङ्गुलिनर्तकः ।

यथा—

"किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
सद्यः स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।

---

१ "महाराज एतत्खलु पवननन्दनागमनेन प्रहर्ष—" । २ "देवस्य हृदयानन्दजननं विदलितं मधुवनम्" इति च्छाया।

अथ व्रीडा—

दुराचारादिभिर्व्रीडा धाष्टर्याभावस्तमुन्नयेत् ।
साचीकृताङ्गावरणवैवर्ण्याधोमुखादिभिः ॥ २४ ॥

यथाऽमरुशतके—

"पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥"

अथापस्मारः—

आवेशो ग्रहदुःखाद्यैरपस्मारो यथाविधिः ( धि ) ।
भूपातकम्पप्रस्वेदलालाफेनोद्गमादयः ॥ २५ ॥

यथा माघे—

"आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥"

अथ मोहः—

मोहो विचित्तता भीतिदुःखावेशानुचिन्तनैः ।
तत्राज्ञानभ्रमाघातघूर्णनादर्शनादयः ॥ २६ ॥

यथा कुमारसंभवे—

"तीव्राभिषङ्गप्रभवेन वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥"

यथा चोत्तररामचरिते—

"विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।

---

दुराचारेति–धाष्टर्याभावाद् दुराचारादिभिर्व्रीडा जायते न तु धाष्टर्ये सत्यपीत्यर्थः । "तम्" इत्यत्र 'ताम्' इति वक्तव्यम्–व्रीडापदस्य स्त्रीलिङ्गत्वात् न चेन्दवि संमतति वृत्तभङ्गप्रसक्त्येत्यत्र 'धाष्टर्याभावाण्दुद्भव' इति वक्तव्यम् ॥ २४ ॥

यथाविधि–प्रारब्धानुसारेण ग्रहदुःखादिकृत आवेशोऽपस्मारः ।

तत्र स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥"

अथ मतिः—

भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः।

यथा किराते—

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः॥"

यथा च—

"न पण्डिताः साहसिका भवन्ति श्रुत्वापि ते संतुलयन्ति तत्त्वम्।
तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम्॥"

अथालस्यम्—

आलस्यं श्रमगर्भादेर्जाड्यं जृम्भासितादिमत्॥ २७॥

यथा ममैव—

'चलति कथंचित्पृष्टा यच्छति वचनं कथंचिदालीनाम्।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः॥'

अथावेगः—

आवेगः संभ्रमोऽस्मिन्नभिसरजनिते शस्त्रनागाभियोगो[1]
वातात्पांसूपदिग्धस्त्वरितपदगतिर्वर्षजे पिण्डिताङ्गः।
उत्पातात्स्रस्तताङ्गेष्वहितहितकृते शोकहर्षानुभावा
वह्नेर्धूमाकुलास्यः करिजमनु भयस्तम्भकम्पापसाराः॥ २८॥

अभिसरो राजविद्रवादिः तद्धेतुरावेगो यथा ममैव—

"आगच्छागच्छ सज्जं कुरु वरतुरगं संनिधेहि द्रुतं मे
खड्गः क्वासौ कृपाणीमुपनय धनुषा किं किमङ्गप्रविष्टम्।

असितम्-स्थितिः, आलस्येन निद्रेत्यर्थः॥ २७॥

आवेग इति—अभिसरजनिते आवेगे शस्त्राणां नागानां गजानां चाभियोगः, वातात्-वातजन्ये आवेगे धूलिधूसरितस्त्वरितपदगतिश्च, वर्षजन्ये आवेगे संकुचितशरीरः, उत्पातात्-उत्पातजन्ये आवेगेऽङ्गेषु स्रस्तता-शिथिलता, अहितकृते आवेगे शोकः, हितकृते आवेगे हर्षः, वह्नेः-वह्निजन्ये आवेगे धूमेनाकुलमुखम्, करिजमनु=करिजन्ये आवेगे भयस्तम्भकम्पापसरणादिकं भवतीत्यन्वयः॥ २८॥

१ "नागाभियोगौ" इति पाठान्तरम्।

मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥"

अथवा ।

"कः समुचिताभिषेकादार्यं प्रच्यावयेद्गुणज्येष्ठम् ।
मन्ये ममैव पुण्यैः सेवावसरः कृतो विधिना ॥"

अथावहित्था—

लज्जाद्यैर्विक्रियागुप्ताववहित्थाऽङ्गविक्रिया ।

यथा कुमारसंभवे—

"एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥"

अथ व्याधि.—

व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ॥ २९ ॥

दिङ्मात्रं तु यथा—

"अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुभ्योऽर्पिता
दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः ।
अद्य श्वः परनिर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विश्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥"

अथोन्मादः—

अप्रेक्षाकारितोन्मादः सन्निपातग्रहादिभिः ।
अस्मिन्नवस्था रुदितगीतहासासितादयः ॥ ३० ॥

यथा—"आः क्षुद्रराक्षस तिष्ठ तिष्ठ क्व मे प्रियतमामादाय गच्छसि" इत्युपक्रमे "कथम्—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥" इत्यादि ।

लज्जाद्यैरिति—विक्रियाया विकारस्य लज्जादिवशेन या गुप्तिः=गोपनं साऽवहित्था, तनाङ्गविक्रियाऽनुभावः ।

अन्यत्र=वैद्यकशास्त्रे ॥ २९ ॥

---

१ "स्थान०" इति पाठान्तरम् ।

अथ विषादः—

प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥ ३१ ॥

यथा वीरचरिते—" हा आर्ये ताडके किं हि नामैतत् अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते

नन्वेष राक्षसपतेः स्खलितः प्रतापः
प्राप्तोऽद्भुतः परिभवो हि मनुष्यपोतात् ।
दृष्टः स्थितेन च मया स्वजनप्रमाथो
दैन्यं जरा च निरुणद्धि कथं करोमि ॥ "

अथौत्सुक्यम्—

कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसंभ्रमैः ।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥ ३२ ॥

यथा कुमारसंभवे—

" आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥ "

यथा वा तत्रैव—

" पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥ "

अथ चापलम्—

मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥ ३३ ॥

यथा विकटनितम्बायाः—

" अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
बालामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥ "

"अन्यासु" इत्यत्र भ्रमरलक्ष्यो वरस्तन्द्र ॥ ३३ ॥

१ " त्वनि. " इति पाठान्तरम् ।

यथा वा—

" विनिकषणरणत्कठोरदंष्ट्राक्रकचविशङ्कटकन्दरोदराणि ।
अहमहमिकया पतन्तु कोपात् सममधुनैव किमत्र मन्मुखानि ॥

अथवा प्रस्तुतमेव तावत्सुविहितं करिष्ये । " इति ।

अन्ये च चित्तवृत्तिविशेषा एतेषामेव विभावानुभावस्वरूपानुप्रवेशान्न पृथग्वाच्याः ।

अथ स्थायी—

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥ ३४ ॥**

सजातीयविजातीयभावान्तरैरतिरस्कृतत्वेनोपनिबध्यमानो रत्यादिः स्थायी यथा बृहत्कथायां नरवाहनदत्तस्य मदनमञ्चुकायामनुरागः तत्तद्वान्तरानेकनायिकानुरागैरतिरस्कृतः स्थायी । यथा च मालतीमाधवे श्मशानाङ्के बीभत्सेन मालत्यनुरागस्यातिरस्कारः—"मम हि प्राक्तनोपलम्भसंभावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात् प्रतीयमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसंतानस्तन्मयमिव करोत्यन्तर्वृत्तिसारूप्यतश्चैतन्यम्" इत्यादिनोपनिबद्धः । तदनेन प्रकारेण विरोधिनामविरोधिनां च समावेशो न विरोधी ।

तथाहि—विरोधः सहानवस्थानं बाध्यबाधकभावो वा, उभयरूपेणापि

---

अन्ये इति—एते हि व्यभिचारिणश्चित्तवृत्तिविशेषरूपा एव चित्तवृत्तिविशेषाश्च यद्यप्यन्येऽपि संभवन्ति तथाप्येतेषामेवोक्ताना तेऽपि विभावादिस्वरूपेषु प्रविशन्तीति न पृथग् वाच्या इत्यर्थः ।

"मम हि" इति वाक्यं स्मृतिस्थाने व्याख्यातम् ।

तदनेनेति—उक्तमालतीमाधवादिनिर्दिष्टप्रकारेण अङ्गाङ्गिभाववत्तयेति यावत् । विरोधिनामविरोधिनां भावानाम् ।

विरोधाभावमुपपादयति—तथा हीति । सहानवस्थानम्=एकत्र स्थित्यऽयोग्यता । उभयरूपेण=सहानवस्थानबाध्यबाधकभावेनुभयरूपेणापि भावानां तादात्म्यम्=विरुद्धत्वं न संभवति—अस्य भावस्यैकरूपत्वेन=समुदितरूपेण एकत्रीभावेनाऽऽविर्भावात्, उक्तं च भावादीनां प्रपाणकरसन्यायेन मिश्रितरूपेण प्रतीतिविषयत्वं तदत्रानुसंधेयम् । यदि पार्थक्येन प्रतीतिः स्यात् तदा स्यादपि वि-

न तावत्तादात्म्यमऽस्यैकरूपत्वेनैवाविर्भावात् । स्थायिनां च भावादीनां यदि विरोधस्तत्रापि न तावत् सहानवस्थानम्—रत्याद्युपरक्ते चेतसि स्रक्सूत्रन्यायेनाविरोधिनां व्यभिचारिणां चोपनिनन्धः समस्तभावकस्वसंवेदनसिद्धः यथैव स्वसंवेदनासिद्धस्तथैव काव्यव्यापारसंरम्भेणानुकार्येष्वावेश्यमानः स्वचेतःसंभेदेन तथाविधानन्दसंविदुन्मीलनहेतुः संपद्यते तस्मान्न तावद्भावानां सहानवस्थानम् ।

वाध्यवाधकभावस्तु भावान्तरैर्भावान्तरतिरस्कारः स च न स्थायिनामविरुद्धव्यभिचारिभिः स्थायिनोऽविरुद्धत्वात् तेषामङ्गत्वात्–प्रधानविरुद्धस्य चाङ्गत्वायोगात्, आनन्तर्यविरोधित्वमप्यनेन प्रकारेणाऽपास्तं भवति तथा च मालतीमाधवे शृङ्गारानन्तरं बीभत्सोपनिनन्धेऽपि न किंचिद्वैरस्यम् तदेवमेव स्थिते विरुद्धरसैकावलम्बनत्वमेव विरोधे हेतु',

---

रोधो न चैवमस्ति, न च मिश्रिताना परस्पर विरोधः सभवति विरोधे सति मिश्रणासंभवादित्यर्थः ।

यदि स्थायिनां भावानाम्=व्यभिचारिणा च परस्परं विरोध उच्यते तदा तयोरपि न तावत्सहानवस्थानलक्षणो विरोध. संभवतीत्युपपादयति–स्थायिना चेति । रत्याद्युपरक्ते=रत्यादिभाविते । स्रक्सूत्रन्यायेन=यथैकस्मिन्नेव सूत्रे माल्यसपत्त्यर्थं बहुविधानि पुष्पाणि निक्षिप्यन्ते तथैकस्मिन् चेतसि बहूनां भावाना सहस्थितिर्न विरुद्धेत्यर्थः । अनुकार्ये=श्रीरामादौ । स्वचेतस्सभेदेन=स्वचित्तस्य तादात्म्यापत्त्या=उत्तेन तद्भावभावनेन। अत्र हेतुत्वमुपनिबन्धस्योक्तस्य विशेयम्। उपसंहरति–तस्मादिति ।

बाध्यबाधकभावलक्षणविरोधं निराकुरुते–बाध्यबाधकभाव इति । स च बाध्यबाधकभावः स्थायिनामऽविरुद्धव्यभिचारिभिस्तु सह न संभवति–स्थायिनोऽविरुद्धत्वात् तेषाम् तेषाम्=अविरुद्धव्यभिचारिणां स्थाय्यऽविरुद्धत्वादित्यर्थ. । अविरुद्धत्वे "अङ्गत्वात्" इति हेतुः । अत्र "स च व्यभिचारिणां स्थायिनामविरुद्धव्यभिचारिभि', स्थायिनोऽविरुद्धा." इत्येव पाठस्त्वयुक्त एव । आनन्तर्यविरोधित्वमप्यनेन प्रकारेण किं वा स्रक्सूत्रन्यायप्रकारेणापास्तं भवतीत्याह–आनन्तर्येति । तथा च=अनन्तर्येण विरोधाभावात् । उपसंहरति–तदेवमेवेति, एवमेव स्थिते नामोक्तसहानवस्थानादिलक्षणविरोधाभावे सिद्धे । विरुद्धरसैकावलम्बनत्वम्=विरुद्धयोः वीरादिभयानकादिरसयोरेकावलम्बनत्वम्=

-सत्वऽविरुद्धरसान्तरव्यवधानेनोपनिबध्यमानो न विरोधी यथा—

" अण्णहुणाहुमहेलिअहुजुहुपरिमलुसुसुअन्धु ।
मुहुकन्तह अगत्थणहअङ्ग ण फिट्टइ गन्धु "

इत्यत्र बीभत्सरसस्याङ्गभूतरसान्तरव्यवधानेन शृङ्गारसमावेशो न विरुद्धः । प्रकारान्तरेण वैकाश्रयविरोधः परिहर्तव्यः ।

ननु यत्रैकतात्पर्येणेतरेषां विरुद्धानामविरुद्धानां च न्यग्भूतत्वेनोपादानं तत्र भवत्वङ्गत्वेनाऽविरोधः यत्र तु समप्रधानत्वेनानेकस्य भावस्योपनिबन्धनं तत्र कथम्? यथा—

" ऐक्कत्तो रुअइ पिआ अण्णत्तो समरतूरणिग्घोसो ।
पेम्मेण रणरसेन अ भडस्स डोलाइअं हिअअम् ॥"

इत्यादौ रत्युत्साहयोः, यथा वा—

" मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥"

इत्यादौ रतिशमयोः, यथा च—

" इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः
स चाय दुष्टात्मा स्वसुरपकृतं येन मम तत् ।

---

एकव्यक्त्याश्रितत्वमेव विरोधे हेतुः—वीरादेर्भयाद्यसंभवादित्यर्थः । स.=एकावलम्बनत्वेन विरुद्धोऽपि रसोऽविरुद्धरसान्तरव्यवधानेनोपनिबध्यमानो विरोधी न भवति—तयोर्द्वयोः परस्परं विरुद्धयो रसयोर्मध्येऽविरुद्धस्य रसान्तरस्य निवेशात्, एकावलम्बनत्वेन विरुद्धयो रसयोरानन्तर्येणैव विरोधभावादित्यर्थः । एतादृशाऽविरोधमुदाहरति—"अण्णहु" इति । प्रकारान्तरेण=अङ्गाङ्गीभावकल्पनया वैकाश्रयविरोधः परिहर्तव्य इत्याह—प्रकारान्तरेणेति ।

शङ्कते—नन्विति । एकतात्पर्येण=एकस्य भावस्य रसस्य वा प्राधान्ये तात्पर्येण । न्यग्भूतत्वेन=अङ्गत्वेनेति यावत् । "कथम्" इत्यनन्तरम् 'अविरोधः' इति शेषः । विरुद्धाना समप्रधानत्वेऽपि विरोधाभावे जगति विरोधो दत्ताञ्जलिरेव स्यादिति तात्पर्यम् । समप्राधान्ये उदाहरणान्याह—यथेत्यादिना । "रत्युत्साहयो." इत्यादेः "समप्राधान्येनोपनिबन्धः" इत्यग्रिमवाक्येनान्वयः ।

---

१ नितान्तास्पुटत्वादस्य श्लोकस्य व्याख्या न लिख्यते ।

२ "एकतो रोदिति प्रियान्यतः समरतूर्यनिर्घोषः ।
प्रेम्णा रणरसेन च भटस्य दोलायितं हृदयम् ॥" इति छाया ।

इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः
कुतो वेषश्चायं कथमिदमिति भ्राम्यति मनः ॥"

इत्यादौ तु रतिक्रोधयोः,

"अन्त्रैः कल्पितमङ्गलप्रतिसरा. स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनद्धशिरसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुरां कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥"

इत्यादावेकाश्रयत्वेन रतिजुगुप्सयोः,

"एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥"

इत्यादौ शमरतिक्रोधानाम्,

"एकेनाक्ष्णा प्रविततरुषा वीक्षते व्योमसस्थं
भानोर्बिम्बं सजललुलितेनापरेणात्मकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥"

इत्यादौ च रतिशोकक्रोधानां समप्राधान्येनोपनिबन्धस्तत्कथं न विरोधः ? ।

*अत्रोच्यते—अत्राप्येक एव स्थायी तथा हि—"एक्तो रुअइ पिआ"* इत्यादौ स्थायिभूतोत्साहव्यभिचारिलक्षणवितर्कभावहेतुसंदेहकारणतया करुणसङ्ग्रामतूर्ययोरुपादानं वीरमेव पुष्णातीति भटस्येत्यनेन पदेन प्रति-

एकाश्रयत्वेनेति–पूर्वत्र रत्युत्साहादीनामालम्बनभेदोऽस्ति "अन्त्रैः कल्पितमङ्गलप्रतिसरा" इत्यत्र तु रतिजुगुप्सयोरालम्बन पिशाचाङ्गनैवेत्येकालम्बनत्वम्, तत्र रतिसमवाय पिशाचव्यक्तौ जुगुप्सासमवायश्च श्रोतरीत्यन्यदेतत् ।

उत्तरमाह–अत्रोच्यते इत्यादिना । अत्र=उक्तोदाहरणेषु स्थायित्वमेकस्यैव भावस्यास्ति न त्वनेकस्य येन समप्राधान्येन विरोध स्यादित्यर्थः । विरोधाभाव मुपपादयति–तथा हीत्यादिना । स्थायीति–स्थायीभूतो य उत्साहो व्यभिचारिलक्षणश्च यो वितर्कभावस्तस्य हेतुभूतो य. संदेहस्तत्कारणतयेत्यन्वयः, अत्र

पादितम् । न च द्वयोः समप्रधानयोरन्योन्यमुपकार्योपकारकभावरहितयोरेकवाक्यभावो युज्यते, किं चोपक्रान्ते सङ्ग्रामे सुभटानां कार्यान्तरकरणेन प्रस्तुतसङ्ग्रामौदासीन्येन महदनौचित्यम्. अतो भर्तुः सङ्ग्रामैकरसिकतया शौर्यमेव प्रकाशयन् प्रियतमाकरुणो वीरमेव पुष्णाति ।

एवम् "मात्सर्यम्" इत्यादावपि चिरप्रवृत्तरतिवासनाया हेयतयोपादानाच्छमैकपरत्वम् "आर्याः समर्यादम्" इत्यनेन प्रकाशितम् ।

एवम् "इयं सा लोलाक्षी" इत्यादावपि रावणस्य प्रतिपक्षनायकतया निशाचरत्वेन मायाप्रधानतया च रौद्रव्यभिचारिविषादविभाववितर्कहेतुतया रतिक्रोधयोरुपादानं रौद्रपरमेव, "अन्त्रैः कल्पितमङ्गलप्रतिसराः" इत्यादौ हास्यरसैकपरत्वमेव, "एकं ध्याननिमीलनात्" इत्यादौ शंभोर्भावान्तरैरनाक्षिप्ततया शमस्यस्यापि योग्यन्तरशमाद्वैलक्षण्यप्रतिपादनेन शमैकपरतैव "समाधिसमये" इत्यनेन स्फुटीकृता । "एकेनाक्ष्णा" इत्यादौ तु समस्तमपि वाक्यं भविष्यद्विप्रलम्भविषयमिति न क्वचिदनेकतात्पर्यम् ।

यत्र तु श्लेषादिवाक्येष्वनेकतात्पर्यमपि तत्र वाक्यार्थभेदेन स्वतन्त्रतया चार्थद्वयपरतेत्यऽदोषः यथा—

---

करुणसङ्ग्रामतूर्ययोरुपादानेनैव दोलायितपदव्यङ्ग्यसंदेहो जायते इति करुणसङ्ग्रामतूर्ययोरुपादानमुक्तसंदेहस्य कारणम्, संदेहे सत्येव वितर्को जायते इति संदेहो वितर्ककारणम्, स्पष्टमन्यत् । एकवाक्यभावः=एकवाक्यता=अङ्गाङ्गीभाव इति यावत् । प्रियतमाकरुण.=प्रियासमवेतः करुणः । करुणपद च करुणविप्रलम्भपरम् । भटस्य चित्त दोलायितं न तु भटेन संग्रामगमनं प्रियाप्रीत्या प्रत्याख्यातमितिरीत्या प्रियतमाकरुणः शौर्यं प्रकाशयति तेन च वीररसं पुष्णातीतिभाव ।

रौद्रेति—रौद्रस्य व्यभिचारी विषादस्तस्य विभाव.=आलम्बनविभावः सीता तद्विषयकः कथंतदव्यङ्ग्यो यो वितर्कस्तद्धेतुतया— यतो रतिक्रोधयोरुभयोः परस्परविरुद्धयोः सत्वादेव किं कर्तव्यमिति वितर्को जायते, रावणस्य रौद्रप्रधानत्वेनात्र रौद्रस्यैव पुष्टि –रतेस्तदङ्गभूतत्वादिति भाव । अनेकतात्पर्यम्=अनेकेषु तात्पर्यम्, येन विरोधः स्यादिति शेषः ।

अर्थद्वयेति—श्लेषस्थले एकस्मिन् पक्षे एकस्यैव भावस्य रसस्य वा प्राधान्यं भवत्यन्यस्मिन् पक्षे चापरस्येति न तत्रापि विरोधसंभवः—अनेकप्राधान्याभावादित्यर्थः । स्वतन्त्रतयेति—श्लेषस्थले प्रतीयमानार्थयोर्वर्ण्योपमेयोरुपमानादि-

" श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्या चरणारविन्दललितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्मचक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥"

इत्यादौ । तदेवमुक्तप्रकारेण रत्याद्युपनिबन्धे सर्वत्राविरोधः । यथा वा-श्रूयमाणरत्यादिपदेष्वपि वाक्येषु तत्रैव तात्पर्यं तथाग्रे दर्शयिष्यामः ।

ते च—

रत्युत्साहजुगुप्साः क्रोधो हासः स्मयो भयं शोकः ।
शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य ॥ ३५ ॥

इह शान्तरसं प्रति वादिनामनेकविधा विप्रतिपत्तयः, तत्र केचिदाहुः—नास्त्येव शान्तो रसः—तस्याचार्येण विभावाद्यप्रतिपादनाल्लक्षणाकरणात् । अन्ये तु वस्तुतस्तस्याभावं वर्णयन्ति—अनादिकालप्रवाहायातरागद्वेषयोरुच्छेत्तुमशक्यत्वात् । अन्ये तु वीरबीभत्सादावन्तर्भावं वर्णयन्ति ।

भावो भवति तत्रोपमानपक्षस्याङ्गत्वेनोपमेयपक्षस्य प्राधान्येऽपि वाक्यार्थभेदस्तु भवत्येवेत्येकस्मिन् वाक्यार्थे एकस्यैव प्राधान्यं प्राप्तम्, यत्र तूपमानोपमेयादिभावो न भवति किं तु स्वातन्त्र्येणैव वाक्यार्थयोर्भानं भवति तत्र तु श्लिष्टवाक्यस्य स्वातन्त्र्येणैव=अङ्गाङ्गिभावराहित्येनैवार्थद्वयपरत्वम् ( बोधकत्वम् ) भवतीति प्रतिवाक्यार्थमेकस्यैव प्राधान्येनाऽनेकप्राधान्याभावान्न विरोधसंभावनेति भावः ।

यथा वेति–रत्यादीनां व्यक्तानामेव भावत्वं भवति न तु शक्त्योपस्थितानामिति रत्यादिपदसत्त्वे रत्यादिपदेन शक्त्योपस्थितानां रत्यादीनां भावत्वासंभवात् कथं प्राधान्यं स्यादित्याशङ्कायामाह–श्रूयमाणेति, तादृशस्थले रत्यादेर्भावत्वासंभवेऽपि तात्पर्यं तु तत्रैव=शक्त्योपस्थितरत्यादिष्वेव भवतीत्यर्थः । किं वा " अश्रूयमाण " इति पदच्छेदः, यत्र काव्यवाक्ये रत्यादिपदं न भवति तत्रापि रत्यादिष्वेव तात्पर्यं भवति–विभावादिभी रत्यादीनां तत्राक्षेपो भवतीति सिद्धान्तादित्यर्थः ।

ते=स्थायिभावाः । एतस्य=शमस्य ।

"नास्त्येव शान्तो रस " इत्यस्य सामान्यतः शान्ताऽत्यन्ताभावे न तात्पर्यं किं तु नाट्ये शान्तस्याऽभाव इत्येव । वीरेति–संसारस्य कामक्रोधादिदोषाणां वा विजेयत्वे शान्तरसस्य वीरेऽन्तर्भावः, मलिनत्वेन हेयत्वपक्षे च बीभत्सेऽन्त-

एवं वदन्तः शममपि नेच्छन्ति । यथा तथास्तु । सर्वथा नाटकादावभिनयात्मनि स्थायित्वमस्माभिः शमस्य निषिध्यते—तस्य समस्तव्यापारप्रविलयरूपस्याभिनयायोगात् ।

यत्तु कैश्चिन्नागानन्दादौ शमस्य स्थायित्वमुपवर्णितम्, तत्तु मलयवत्यनुरागेणाऽऽप्रबन्धप्रवृत्तेन विद्याधरचक्रवर्तित्वप्राप्त्या विरुद्धम्—न ह्येकानुकार्यविभावालम्बनौ विषयानुरागाऽपरागावुपलब्धौ, अतो दयावीरोत्साहस्यैव तत्र स्थायित्वं तत्रैव शृङ्गारस्याङ्गत्वेन चक्रवर्तित्वावाप्तेश्च फलत्वेनाविरोधात्. ईप्सितमेव च सर्वत्र कर्तव्यमिति परोपकारप्रवृत्तस्य विजिगीषोर्नान्तरीयकत्वेन फलं संपद्यत इत्यावेदितमेव प्राक् । अतोऽष्टावेव स्थायिनः ।

ननु च

> 'रसनाद्रसत्वमेतेषां मधुरादीनामिवोक्तमाचार्यैः ।
> निर्वेदादिष्वपि तत्प्रकाममस्तीति तेऽपि रसाः ॥'

इत्यादिना रसान्तराणामन्यैरभ्युपगतत्वान् स्थायिनोऽप्यन्ये कल्पिता इत्यवधारणानुपपत्तिः ।

---

भाव इति भावः । शमम्=शान्तस्थायिनम् । " यथा तथास्तु " इत्यत्र ' उक्तविदुषां मतम् ' 'न तत्रास्माकमभिनिवेशः' इति शेषः । स्वाभिप्रायमाह—सर्वथेति । तस्य=शमस्य । अभिनयायोगात्=अभिनयात्मकनाट्येन संबन्धासंभवादिति । ' अभिनयाऽयोग्यत्वात् ' इति तु पाठो युक्तः स्यात् ।

यत्त्विति, यदि नागानन्दे जीमूतवाहनः शमप्रधानः स्यात्तदा तस्य मलयवत्यामनुरागो विद्याधरचक्रवर्तित्वस्वीकारश्च न स्यादित्यर्थः । नहीति—एको योऽनुकार्यलक्षणविभावः=चेतनस्तदालम्बनौ=तदाश्रयौ विषयस्यानुरागापरागौ न क्वचिदप्युपलब्धौ—एकत्र विषयस्यानुरागो वा वैराग्यं वा संभवति न तु द्वयमपि परस्परं विरोधात् । अपरागः=वैराग्यम् । तत्र=नागानन्दादौ । तत्रैव=दयावीरोत्साहे एव । नान्तरीयकत्वेन=तेन सहावश्यंभावित्वेन । प्राक्=द्वितीयप्रकाशारम्भे धीरोदात्तलक्षणव्याख्यायाम् ।

शङ्कते—नन्विति । एतेषाम्=निर्वेदादीनाम् । मधुरादीनाम्=शृङ्गारादीनाम् । तत्=रसनकर्मत्वम् । अवधारणानुपपत्तिः=" अष्टावेव स्थायिनः " इति नियमानुपपत्तिः ।

अत्रोच्यते—

निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम् ।
वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः ॥ ३६ ॥

( अताद्रूप्यात्= ) विरुद्धाविरुद्धाऽविच्छेदित्वस्य निर्वेदादीनामभावादस्थायित्वम् अत एव ते चिन्तादिस्वस्वव्यभिचार्यन्तरिता अपि परिपोषं नीयमाना वैरस्यमावहन्ति । न च निष्फलावसानत्वमेतेषामस्थायित्वनिबन्धनम्—हासादीनामप्यस्थायित्वप्रसङ्गात् पारम्पर्येण तु निर्वेदादीनामपि फलवत्त्वात्, अतो निष्फलत्वमस्थायित्वे प्रयोजकं न भवति किं तु विरुद्धैरविरुद्धैर्भावैरतिरस्कृतत्वम् । न च तन्निर्वेदादीनामिति न ते स्थायिनः, ततो रसत्वमपि न तेषामुच्यते अतोऽस्थायित्वादेवैतेषामरसता।

कः पुनरेतेषां काव्येनापि संबन्धः ? न तावद्वाच्यवाचकभावः स्वशब्दैरनावेदितत्वात् नहि शृङ्गारादिरसेषु काव्येषु शृङ्गारादिशब्दा रत्यादिशब्दा वा श्रूयन्ते येन तेषां तत्परिपोषस्य वाभिधेयत्वं स्यात्, यत्रापि च श्रूयन्ते तत्रापि विभावादिद्वारकमेव रसत्वमेतेषां न स्वशब्दाभिधेयत्वमात्रेण ।

---

उत्तरमाह—अत्रोच्यते इत्यादिना । अताद्रूप्यात्=विरुद्धाविरुद्धाभ्यां भावाभ्यामविच्छेद्यत्वराहित्यात् । अत एव=स्वाद्यत्वाभावादेव । ते=निर्वेदादयः मध्यनिक्षिप्तैश्चिन्तादिस्वव्यभिचारिभिः शृङ्गारादिभ्योऽन्तरिताः=व्यवहिता अपि ( किमुतानन्तरिताः ) परिपोषं नीयमाना वैरस्यमावहन्ति तेषामपुष्टानामेव कदाचित्प्राप्तानां चमत्कारित्वादित्यर्थः । निष्फलावसानत्वम्=अवसाने निष्फलत्वम् । एतेषाम्=निर्वेदादीनाम्, अस्थायित्वनिबन्धनम्=अस्थायित्वकारणम् । रसत्वम्=रसत्वावस्थाप्राप्तिः । अत इति—स्थायिनामेव रसत्वं संभवति नाऽस्थायिनां निर्वेदादीनामित्यर्थः ।

भावादीनां केन प्रकारेण बोधो भवतीत्यभिप्रायेणाशङ्कते—क इत्यादिना । एतेषाम्=भावादीनाम् । निर्वेदादेरस्थायित्वप्रकरणं समाप्तम् ।

वाच्येति—भावादीनां वाच्यत्वं काव्यस्य ( काव्यघटकरत्यादिशब्दस्य ) वाचकत्वम् । अनावेदितत्वादिति—रत्यादीनां रत्यादिपदैः प्रतिपादने रसदोषस्योक्तत्वादित्यर्थः । अभिधेयत्वम्=वाच्यत्वम् " शृङ्गारादिरसेषु " इति काव्यविशेषणम् । तेषाम्=रत्यादीनाम् । तत्परिपोषस्य=रत्यादिपरिपोषस्य । यत्रापीति—यत्रापि काव्येषु श्रूयन्ते रत्यादिशब्दा इत्यर्थः । विभावादिद्वारकम्=विभावादिसंयोगेन ।

नापि लक्ष्यलक्षकभावः—तत् सामान्याभिधायिनस्तु लक्षकस्य पदस्याप्रयोगात् । नापि लक्षितलक्षणया तत्प्रतिपत्तिः यथा ' गङ्गायां घोषः ' इत्यादौ तत्र हि स्वार्थे स्रोतोलक्षणे घोषस्यावस्थानासंभवात्स्वार्थे स्खलद्गतिर्गङ्गाशब्दः स्वार्थाविनाभूतत्वोपलक्षितं तटमुपलक्षयति । अत्र तु नायकादिशब्दाः स्वार्थेऽस्खलद्गतयः कथमिवार्थान्तरमुपलक्षयेयुः ? । को वा निमित्तप्रयोजनाभ्यां विना मुख्ये सत्युपचरितं प्रयुञ्जीत ? । अत एव 'सिंहो माणवकः ' इत्यादिवत् गुणवृत्त्यापि नेयं प्रतीतिः ।

यदि वाच्यत्वेन रसप्रतिपत्तिः स्यात्तदा केवलवाच्यवाचकभावमात्रव्युत्पन्नचेतसामप्यरसिकानां रसास्वादो भवेत् । न च काल्पनिकत्वम्—अविगानेन सर्वसहृदयानां रसास्वादोद्भूतेः । अतः केचिदभिधालक्षणागौणी-

---

लक्ष्यलक्षकभाव निराचष्टे—नापीति तत्सामान्याभिधायिन· पदस्य=रसभावादिपदस्य, सामान्यवाचकपदस्य विशेषधर्मावच्छिन्ने लक्षणास्वीकाराद् रसादि शब्दाना शृङ्गारादौ विशेषे लक्षणा सभवतीति लक्षकस्येत्युक्तम् । नापीति—तत्प्रतिपत्तिः रसादिप्रतीतिः । तत्र' गङ्गाया घोष ' इत्यत्र । स्वार्थे=प्रवाहे स्खलद्गति·=बाधितप्रवृत्तिः ( प्रवाहबोधनाऽसमर्थ ) गङ्गाशब्दः स्वार्थस्याविनाभूतत्वेन ( व्याप्यत्वेन ) उपलक्षित तटमुपलक्षयति । अत्र=काव्ये । अस्खलद्गतय =नबाधितप्रवृत्तयः । कथमिवेति—स्वार्थबोधनासंभवेह्यऽर्थान्तरबोधनमापतति न तु स्वार्थबोधनसंभवेपीत्यर्थ । रत्यादिशब्दानां लाक्षणिकत्वेन प्रयोगापत्तिरपि नास्तीत्याह—को वेति, मुख्ये=मुख्ये प्रयोगे, सति=सभवति, उपचरितम्=लाक्षणिक पदम् । अत एव=निमित्त विना लाक्षणिकपदप्रयोगस्याऽसंभवादेव, गुणवृत्त्या=सादृश्यप्रयुक्तगौणीलक्षणया, नेय प्रतीति·=न रसादिप्रतीतिः संभवति । ' सिंहो माणवकः ' इत्यत्र तु क्रौर्यादिबोधन प्रयोजनमस्तीति तदर्थं क्रौर्यादिविशिष्टे लाक्षणिक सिंहपद प्रयुज्यते. नैव रत्यादिपदप्रयोगपक्षे संभवतीत्यर्थः । इदमत्र चिन्त्यम्—' गङ्गायां घोष· ' इति न लक्षितलक्षणाया उदाहरणम्—लक्षणाद्वयस्थले तत्संभवाद् यथा द्विरेफपदे. तत्र रेफद्वये शक्ति· भ्रमरपदे लक्षणा तदनन्तर भृङ्गपदार्थे लक्षितलक्षणेति । किं वा यथा द्विरेफपद भ्रमरपद बोधयित्वा भृङ्ग बोधयति तथात्र गङ्गापद प्रवाहं बोधयित्वा तीर बोधयतीत्येतावन्मात्रसादृश्येन लक्षितलक्षणात्वमुपपादनीयम् ।

काल्पनिकत्वमिति—यदि रसादीनां काल्पनिकत्व स्यात्तदा तत्कल्पकमात्रस्यैवाऽऽस्वादः स्यात् अविगानेन=ऐकमत्येन सर्वेषां रसास्वादो न स्याद् न चैवमस्तीति

भ्यो वाच्यान्तरपरिकल्पितशक्तिभ्यो व्यतिरिक्तं व्यञ्जकत्वलक्षणं शब्दव्यापारं रसालङ्कारवस्तुविषयमिच्छन्ति ।

तथा हि विभावानुभावव्यभिचारिमुखेन रसादिप्रतिपत्तिरुपजायमाना कथमिव वाच्या स्यात् यथा कुमारसंभवे—

" विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ "

इत्यादावनुरागजन्यावस्थाविशेषानुभाववद्गिरिजालक्षणविभावोपवर्णनादेवाऽशब्दापि शृङ्गारप्रतीतिरुदेति, रसान्तरेष्वप्ययमेव न्यायः, न केवलं रसेष्वेव यावद्वस्तुमात्रेऽपि यथा—

" भम धम्मिअ वीसद्धो सो सुणहो अज्ज मारिओ तेण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥ "[1]

इत्यादौ निषेधप्रतिपत्तिरशब्दापि व्यञ्जकशक्तिमूलैव, तथालङ्कारेष्वपि—

" लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः "

इत्यादिषु ' चन्द्रतुल्यं तन्वीवदनारविन्दम् ' इत्याद्युपमाद्यलङ्कारप्रतिपत्तिर्व्यञ्जकत्वनिबन्धनेति । न चासावर्थापत्तिजन्या—अनुपपद्यमानार्था-

न शक्त्यन्तिरूक्तमित्यर्थः, अनेन रसादीनामसत्त्वं परिहृतम् । व्यञ्जनावादिमतेन समाधत्ते-अत इत्यादिना ।

व्यञ्जकत्वलक्षणं शब्दव्यापारं प्रतिपादयति-तथा हीत्यादिना । अवस्थाविशेषलक्षणानुभाववती या गिरिजा तल्लक्षणो य आलम्बनविभावस्तद्वर्णनात्, अशब्दादपि शृङ्गारादिशब्दप्रयोगाभावेऽपीत्यर्थः । नेति-न केवलं रसादिविषयैव प्रतीतिर्व्यञ्जनाव्यापारेण भवति किं तु क्वचित् वस्तुमात्रविषयापि प्रतीतिर्व्यञ्जनाव्यापारेण संभवतीत्यर्थः । उपमुदाहरति-भमेति । निषेधप्रतिपत्तिः-गोदावरीकुञ्जेषु मा भ्रमेति प्रतिपत्तिः, विशेषः काव्यप्रकाशादौ द्रष्टव्यः । अलङ्कारेष्वपि-अलङ्कारविषयापि प्रतीतिर्व्यञ्जनया भवतीत्युदाहरति-लावण्येति ।

व्यञ्जकत्वनिबन्धनेति-व्यञ्जनामूलम् । अनुपपद्यमानेति-अनुपपद्यमानस्वार्थ-

---

१ " भ्रम धार्मिक विस्रब्धः स श्वाद्य मारितस्तेन ।
गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन " इति च्छाया.

पेक्षाभावात् । नापि वाच्यार्थत्वं व्यङ्ग्यस्य—तृतीयकक्षाविषयत्वात् । तथा हि—'भ्रम धार्मिक' इत्यादौ पदार्थविषयाभिधालक्षणप्रथमकक्षानिष्क्रान्तक्रियाकारकसंसर्गात्मकविधिविषयवाच्यार्थकक्षातिक्रान्ततृतीयकक्षाक्रान्तो निषेधात्मा व्यङ्ग्यलक्षणोऽर्थो व्यञ्जकशक्त्यधीनः स्फुटमेवावभासते अतो नासौ वाच्यार्थः ।

ननु च तृतीयकक्षाविषयत्वमश्रूयमाणपदार्थतात्पर्येषु 'विषं भुङ्क्ष्व' इत्यादिवाक्येषु निषेधार्थविषयेषु प्रतीयत एव वाच्यार्थस्य । न चात्र व्यञ्जकत्ववादिनापि वाच्यार्थत्वं नेष्यते ? तात्पर्यादन्यत्वाद्ध्वनेः । तत्र—स्वार्थस्य द्वितीयकक्षायामविश्रान्तस्य तृतीयकक्षाभावात् सैव निषेध-

स्याऽपेक्षाभावा( प्रतीत्यभावा )दित्यन्वयः, कस्य चिदर्थस्यानुपपद्यमानत्वे ह्यर्थापत्तिः प्रसरति—यथा भोजनं विना पीनत्वस्यानुपपत्त्या दिवा भोजनस्य च प्रतिषेधाद् रात्रिभोजनमर्थापत्त्या 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र कल्प्यते, न चैव रसादिकं विना कस्य चिदनुपपद्यमानत्वमस्ति येनार्थापत्त्या रसादिप्रतीतिः स्यादित्यर्थः । वाच्यार्थत्वमित्यत्र रसादीनामिति शेषः, प्रथमकक्षायां पदार्थोपस्थितिर्द्वितीयकक्षायां पदार्थसंसर्गात्मकवाक्यार्थस्य प्रतीतिस्तृतीयकक्षायां व्यङ्ग्यप्रतीतिर्जायते तत्र व्यङ्ग्यार्थस्य द्वितीयकक्षाविषयत्वाभावान्न वाक्यार्थत्वमित्यर्थः । व्यङ्ग्यस्य तृतीयकक्षाविषयत्वमुपपादयति—तथा हीति । पदार्थविषयाऽभिधाव्यापारलक्षणा प्रथमकक्षा । द्वितीयकक्षाभूता या वाक्यार्थकक्षा तदतिक्रान्ता या तृतीयकक्षा तादृशतृतीयकक्षाक्रान्त=तादृशतृतीयकक्षाविषयः तृतीयकक्षानिविष्ट इति यावत् । असौ=व्यङ्ग्यः । स्पष्टमन्यत् ।

शङ्कते—नन्विति । "वाक्यार्थस्य" इत्यत्र "वाक्यार्थ," इतिपाठस्तु युक्त एव । अश्रूयमाणेषु निषेधादिपदार्थेषु तात्पर्यं येषां तेषु "विष भुङ्क्ष्व" इत्यादिवाक्येष्वित्यन्वय । अत्र=" विषं भुङ्क्ष्व " इत्यादौ व्यञ्जकत्ववादिनापि निषेधस्य वाक्यार्थत्व नेष्यते इति न किं त्विष्यते एवेत्यर्थ, अत्र हेतुमाह—तात्पर्यादिति, तात्पर्यस्य ध्वनित्वम्=व्यङ्ग्यत्व नास्ति ( न स्वीकृतम् ) अत्र च निषेधे एव तात्पर्यमिति निषेधो वाक्यार्थ एव न व्यङ्ग्य इत्यर्थः । व्यङ्ग्यस्य तृतीयकक्षाविषयत्ववादी समाधत्ते—तत्रेति, " विष भुङ्क्ष्व " इत्यत्र स्वार्थस्य=विषभक्षणस्य द्वितीयकक्षायामविश्रान्तस्य=अविश्रान्तत्वेन तृतीयकक्षाभावात्—तृतीयकक्षाया एव अभावात् द्वितीयकक्षाया वाक्यार्थस्य विश्रान्तौ सत्या तृतीया कक्षा भवति 'विषं भुङ्क्ष्व' इत्यत्र च द्वितीयकक्षाया वाक्यार्थस्याविश्रान्त-

कक्षा—तत्र द्वितीयकक्षाविधौ क्रियाकारकसंसर्गानुपपत्तेः प्रकरणात्पितरि वक्तरि पुत्रस्य विषभक्षणनियोगाभावात्।

रसवद्वाक्येषु च विभावप्रतिपत्तिलक्षणद्वितीयकक्षायां रसानवगमात्, तदुक्तम्—

" अप्रतिष्ठमविश्रान्तं स्वार्थे यत्परतामिदम्।
वाक्यं विगाहते तत्र न्याय्या तत्परतास्य सा॥
यत्र तु स्वार्थविश्रान्तं प्रतिष्ठां तावदागतम्।
तत्प्रसर्पति तत्र स्यात्सर्वत्र ध्वनिना स्थितिः॥ "

इत्येवं सर्वत्र रसानां व्यङ्ग्यत्वमेव। वस्त्वलङ्कारयोस्तु क्वचिद्वाच्यत्वं क्वचिद्व्यङ्ग्यत्वं तत्रापि यत्र व्यङ्ग्यस्य प्राधान्येन प्रतिपत्तिस्तत्रैव ध्वनिः अन्यत्र गुणीभूतव्यङ्ग्यत्वं, तदुक्तम्—

" यत्रार्थः शब्दो वा यमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

---

त्वेन तृतीयकक्षैव नास्ति यद्विषयत्व निषेधस्य स्यात्, सैव=वाक्यार्थाश्रयीभूता द्वितीयकक्षैव निषेधकक्षास्ति—द्वितीयकक्षायामेव निषेधः=शत्रुगृहभोजननिषेधः प्रतीयते एवेति न स निषेधस्तृतीयकक्षामपेक्षते इत्यर्थः। उक्ते हेतुमाह—तत्रेति, तत्र=' विष भुङ्क्ष्व ' इत्यत्र द्वितीयकक्षाविधौ=द्वितीयकक्षाया क्रियाकारकसंसर्गस्य विषकर्मकभक्षणरूपवाक्यार्थस्योपपत्तिरेव नास्ति यत एतद् वाक्यं पित्रा पुत्रं प्रत्युक्तमिति प्रकरणाज्ज्ञातं न च पितुः पुत्रं प्रति विषभक्षणादेशः उपपद्यते इति व्याक्यार्थानुपपत्त्या द्वितीयकक्षा शत्रुगृहभोजननिषेधमेव स्वविषयीकरोतीति द्वितीयकक्षायामेव तादृशनिषेधस्य प्रतीयमानत्वान्न तृतीयकक्षाविषयत्वमस्तीति व्यङ्ग्यस्यैव तृतीयकक्षाविषयत्व भवतीत्यर्थः।

रसवदिति—विभावादिविषयकवाक्यार्थबोधलक्षणा या द्वितीयकक्षा तस्यां रसानवगमाद् रसादेर्व्यङ्ग्यत्वमित्यर्थः। अप्रतिष्ठमिति—इदं वाक्यं स्वार्थेऽप्रतिष्ठम्=अविश्रान्तम्=अनुपपन्नं सद् यत्र यत्परताम्=यादृशार्थपरतामवगाहते तत्रास्य=वाक्यस्य सैव तत्परता=तादृशार्थपरता न्याय्या तद्वाक्यं तादृशार्थपरमेव भवतीत्यर्थः। यत्रेति—यत्र तु तद्वाक्यं स्वार्थे विश्रान्तम्=प्रतिष्ठां प्राप्तं सदग्रे प्रसर्पति=किं चिद्बोधयितुं प्रवर्तते तत्र सर्वत्र ध्वनिर्भवति तद्वाक्यम्, विश्रान्तस्यार्थापेक्षया बोध्यान्तरस्य व्यङ्ग्यत्वादित्यर्थः। उपसंहरति—इत्येवमिति। अन्यत्र=व्यङ्ग्यस्याऽप्रधानत्वे। यत्रार्थ इति—" उपसर्जनीकृतस्वार्थौ " इति शब्दार्थयोर्विशेषणम्, शब्दार्थौ स्वयमप्रधानीभूतौ यत्र कंचिदर्थं व्यङ्क्तः=व्यञ्जनाव्यापारेण

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ ”

यथा—“ उपोढरागेण ” इत्यादि । तस्य च ध्वनेर्विवक्षितवाच्याऽविवक्षितवाच्यत्वेन द्वैविध्यम्, अविवक्षितवाच्योऽप्यत्यन्ततिरस्कृतस्वार्थोऽर्थान्तरसंक्रमितवाच्यश्चेति द्विधा । विवक्षितवाच्यश्च असंलक्ष्यक्रमः क्रमद्योत्यश्चेति द्विविधः, तत्र रसादीनामसंलक्ष्यक्रमध्वनित्वं प्राधान्येन प्रतिपत्तौ सत्याम्, अङ्गत्वेन प्रतीतौ रसवदलङ्कार इति ।

अत्रोच्यते—

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।
वाक्यार्थः कारकैर्युक्ता स्थायीभावस्तथेतरैः ॥ ३७ ॥

यथा लौकिकवाक्येषु श्रूयमाणक्रियेषु ‘ गामभ्याज ’ इत्यादिषु अश्रूयमाणक्रियेषु च—‘ द्वारं द्वारम् ’ इत्यादिषु स्वशब्दोपादानात्प्रकरणादिवशाद्बुद्धिसंनिवेशिनी क्रियैव कारकोपचिता वाक्यार्थस्तथा काव्येष्वपि क्वचित् स्वशब्दोपादानात् “ प्रीत्यै नवोढा प्रिया ” इत्येवमादौ क्वचिच्च प्रकरणादिवशान्नियताभिहितविभावाद्यविनाभावाद्वा साक्षाद्भावकचेतसि विपरिवर्तमानो रत्यादिः स्थायी स्वस्वविभावानुभावव्यभिचा-

---

प्रतिपादयतस्तत्र तत्काव्य ध्वनिरित्युच्यते इत्यर्थः, उक्त च—“ इदमुत्तममतिशयिनि ” इत्यादि । प्रधाने इति—अन्यत्र=ध्वनेरन्यत्र यत्र वाक्यार्थमेव प्रधानं भवति रसादिक चाऽप्रधान भवति तस्मिन् काव्ये रसवदाद्यलङ्कारो भवतीत्यन्वयः, तत्र रसादीनामलङ्कारत्वेन गुणीभूत व्यङ्ग्य भवतीत्यर्थः । रसवदाद्यलङ्कारमुदाहरति—उपोढेति—

“ उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोपि रागाद्गलितं न लक्षितम् ” इति ।

अत्र समासोक्तिपरिष्कृतवाक्यार्थस्यैव चमत्कारित्वेन प्राधान्याद् रसस्य चाङ्गत्वाद्रसवदलङ्कारः । क्रमद्योत्य=संलक्ष्यक्रमः । तत्रेति—रसादीना प्राधान्यप्रतीतौ सत्यामसंलक्ष्यक्रमध्वनित्वं काव्यस्येत्यन्वयः । रसादीनामङ्गत्वेन प्रतीतौ सत्या रसवदाद्यलङ्कारः । एते च ध्वनिभेदाः काव्यप्रकाशादौ द्रष्टव्याः ॥ ३६ ॥

स्वमतेन समाधत्ते—वाच्येति । स्वशब्दोपादानात्=क्रियावाचकशब्दोपादानात् । बुद्धिसंनिवेशिनी=बुद्धिस्था । स्वशब्दोपादानात्=विभावादिबोधकरत्यादिप्रियादिशब्दोपादानात् । नियतेति—नियत यदऽभिहित विभावादि तदविनाभावात् ।

रिभिस्तत्तच्छब्दोपनीतैः संस्कारपरम्परया परं प्रौढिमानीयमानो रत्यादिर्वाक्यार्थः ।

न चाऽपदार्थस्य वाक्यार्थत्वं नास्तीति वाच्यम्—कार्यपर्यवसायित्वात्तात्पर्यशक्तेः, तथा हि—पौरुषेयमपौरुषेयं वाक्यं सर्वं कार्यपरम्—अतत्परत्वेऽनुपादेयत्वादुन्मत्तादिवाक्यवत्, काव्यशब्दानां चान्वयव्यतिरेकाभ्यां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्तिविषययोः प्रयोजनान्तरानुपलब्धेः स्वानन्दोद्भूतिरेव कार्यत्वेनावधार्यते, तदुद्भूतिनिमित्तत्वं च विभावादिसंसृष्टस्य स्थायिन एवावगम्यते, अतो वाक्यस्याभिधानशक्तिस्तेन तेन रसेनाऽऽकृष्यमाणा तत्तत्स्वार्थापेक्षिताऽवान्तरविभावादिप्रतिपादनद्वारा स्वपर्यवसायितामानीयते, तत्र विभावादयः पदार्थस्थानीयास्तत्संसृष्टो रत्यादिर्वाक्यार्थः । तदेतत्काव्यवाक्यं यदीयं

---

संस्कारपरम्परया=पूर्वपूर्वप्रतीतविभावादिभिरुत्पन्नैः संस्कारैः । प्रौढिम्=पुष्टिम् ।

ननु रत्यादिपदप्रयोगाभावे पदेनानुपस्थितत्वेनाऽपदार्थत्वाद्रत्यादेः वाक्यार्थत्वं कथं स्यादित्याशङ्क्याह—न चेति । परिहारमाह—कार्येति, तात्पर्यं हि प्रवृत्तिनिवृत्त्यन्यतरलक्षणकार्यपरं भवति, तात्पर्यविषय वाक्यार्थ इति रत्यादेस्तात्पर्यविषयत्वेन वाक्यार्थत्वं सिद्धमित्यर्थः । स्वाभिप्रायमुपपादयति—तथा हीत्यादिना । अतत्परत्वे=कार्यपरत्वाभावे उन्मत्तादिवाक्यवदनुपादेयत्वं स्यादित्यर्थः । काव्यशब्दानामिति—काव्यशब्दानां यौ प्रवृत्तिविषयौ प्रतिपाद्यप्रतिपादकौ—स्थायिविभावादी तयोरित्यन्वयः, काव्ये स्थायी वा रसो वा प्रतिपाद्यो विभावादिश्च तत्प्रतिपादकः । स्वानन्दोद्भूतेः कार्यत्वेन तात्पर्यविषयत्वं तेन च वाक्यार्थत्वं प्राप्तम्, स्वानन्दोद्भूतिरेव च रस इति सिद्धं रसस्य वाक्यार्थत्वम् । तदुद्भूतिनिमित्तत्वम्=स्वानन्दोद्भूतिनिमित्तत्वम् विभावादिसंसृष्टस्य=विभावादिसंयुक्तस्य स्थायिन एव उक्तं च 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । अत इति—यतः स्वानन्दोद्भूतेः ( रसस्य ) तात्पर्यविषयत्वं प्राप्तमतो वाक्यस्याभिधानशक्तिः=प्रतिपादनशक्तिस्तेन तेन=तत्तत्तेन रसेनाऽऽकृष्यमाणा=समनुप्राणीकृता तत्तत्स्वार्थः=तत्तद्रसस्वरूपापेक्षितविभावादिप्रतिपादनद्वारा स्वपर्यवसायिताम् ( तत्तद्रसपर्यवसायिताम् ) आनीयते=आनीयते, काव्यवाक्यानां तत्तद्रसादिप्रतिपादने तात्पर्यं भवतीति भावः । पदार्थवाक्यार्थविभागमाह—तत्रेति । काव्यवाक्यस्य लौकिकवाक्यापेक्षया महत्त्वमाह—तदेतदिति । "यदीयम्" इत्यस्य 'यस्य' इत्यर्थः ।

ताविमौ पदार्थवाक्यार्थौ ।

न चैवं सति गीतादिवत्सुखजनकत्वेऽपि वाच्यवाचकभावानुपयोगः विशिष्टविभावादिसामग्रीविदुषामेव तथाविधरत्यादिभावनावतामेव स्वानन्दोद्भूतेः, तदनेनातिप्रसङ्गोऽपि निरस्तः। ईदृशि च वाक्यार्थनिरूपणे परिकल्पिताभिधादिशक्तिवशेनैव समस्तवाक्यार्थावगतेः शक्त्यन्तरपरिकल्पनं प्रयासः यथावोचाम काव्यनिर्णये—

> 'तात्पर्यानतिरेकाच्च व्यञ्जनीयस्य न ध्वनिः ।
> किमुक्तं स्यादश्रुतार्थतात्पर्येऽन्योक्तिरूपिणि ॥ १ ॥

ताविमौ=भावादिरसौ ।

ननु यथा गीतादेः सुखादिना स्वजन्येन वाच्यवाचकभावो नास्ति तथा काव्यवाक्यजन्यरसादिना काव्यवाक्यस्यापि वाच्यवाचकभावाभावः प्राप्त इत्याशङ्क्याह—न चेति । परिहारमाह—विशिष्टेति, विशिष्टविभावादिसामग्रीविदुषाम्=अलौकिकविभावादिलक्षणज्ञानवतामेव तथाविधरत्यादिभावनावतामेव च स्वानन्दोद्भूतिमभवादित्यन्वयः, विभावादिसामग्रीज्ञानं च वाच्यवाचकभावज्ञानाधीनमिति वाच्यवाचकभावोपयोगः समर्थितः । तदनेनेति—तथाविधरत्यादिभावनावतामेव स्वानन्दोद्भूतिर्जायते इति नियमेन अतिप्रसङ्ग=अरसिकाना रसास्वादोऽपि निरस्तो वेदितव्य इत्यर्थः । ईदृशि=एवरूपे वाक्यार्थनिरूपणे ( निर्णये ) जाते नाम तात्पर्यार्थस्य वाक्यार्थत्वेन रसस्य काव्यवाक्यार्थत्वे प्राप्ते परिकल्पिता=सकलप्रसिद्धा याऽभिधादिशक्तिस्तद्वशेनैव समस्तस्य=सर्वविधस्य वाक्यार्थस्य रसादेरप्यवगतिः संभवतीति काव्यवाक्यानां शक्त्यन्तरपरिकल्पनम्=व्यञ्जनाव्यापारकल्पनं व्यञ्जनावादिनां प्रयास एवेत्यर्थ. । उक्ते स्वनिर्मितकाव्यनिर्णयस्य वाक्यानि निर्दिशति—तात्पर्यानतिरेकादिति ।

तात्पर्येति—व्यञ्जनीयस्य=व्यङ्ग्यस्य तात्पर्यानतिरेकाद् ध्वनिः=ध्वनिनामकव्यञ्जनाव्यापारवत् काव्यं नास्तीत्यन्वयः । व्यङ्ग्यस्य तात्पर्येऽन्तर्भावात् तत्प्रतीत्यर्थं व्यञ्जनापेक्षाऽभावात् व्यञ्जनाव्यापारवत्त्वेनाभिमतं ध्वनित्वं काव्यस्य न संभवतीत्यर्थः । " व्यञ्जनीयस्य " इत्यत्र " व्यञ्जकत्वस्य " इतिपाठस्तु चिन्त्य,। ध्वनिवादी स्वमतेनोत्तरमाह—किमुक्तमिति, " भो निर्दिशाग्नेटकम् " इत्याद्यन्योक्तिरूपिणि अश्रुतार्थतात्पर्ये=अश्रुततात्पर्यार्थे वाक्ये किमुक्तं स्यात्=अत्रेदं तात्पर्यमिति कथं वक्तुं शक्येत ? न शक्यते इत्यर्थः—यतस्तात्पर्यं हि वक्तुरिच्छा वाग्नेटकस्य चेच्छा न संभवति जडत्वादिति प्रतीयमानस्य निर्वेदस्य कथं तात्-

विष भक्षय पूर्वो यश्चैव परसुतादिषु ।
प्रसज्यते प्रधानत्वाद्ध्वनित्वं केन वार्यते ॥ २ ॥
ध्वनिश्चेत्स्वार्थविश्रान्तं वाक्यमर्थान्तराश्रयम् ।
तत्परत्वं त्वविश्रान्तौ, तन्न–विश्रान्त्यसम्भवात् ॥ ३ ॥
एतावत्येव विश्रान्तिस्तात्पर्यस्येति किंकृतम् ।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम् ॥ ४ ॥
भ्रम धार्मिक विश्रब्धमिति भ्रमिकृतास्पदम् ।
निर्व्याभृत्ति कथ वाक्य निषेधमुपसर्पति ॥ ५ ॥

---

र्यार्थत्व स्यात् ? तथा च तात्पर्यार्थादतिरिक्त एव व्यङ्ग्यार्थ इति तद्बोधनार्थं व्यञ्जनाव्यापारस्यापेक्षा प्राप्तेति सिद्धो ध्वनिरिति भाव ॥ १ ॥

किं च ' विष भक्षय मा चास्य गृहे भुङ्क्था , इत्यादौ प्रतीयमानस्य प्राधान्याद् यद् ध्वनित्वं प्रसज्यते प्राप्नोति तत् येन वारयितुं शक्यते ? न केनापीत्यर्थ विषभक्षणादपि शत्रुगृहभोजनं निकृष्टमिति प्रतीयमानस्य तात्पर्यशक्त्या प्रतीतेरसंभवाद् व्यञ्जनाव्यापार स्वीकर्तव्य इति भाव । वादभास्करग्रन्थेषु द्रष्टव्य । ' य पूर्व ' इति परमुद्दिश्योक्तम् ' विषं भक्षय ' इति पुनमुद्दिश्योक्तमित्युक्तम् ' परसुतादिषु ' इति ॥ २ ॥

ध्वनिवादी व्यङ्ग्यतात्पर्ययोर्भेदं प्रदर्शयति ध्वनिरिति–स्वार्थे विश्रान्तं म द्वाक्यं चेदर्थान्तराश्रयम्=अर्थान्तरबोधकं भवति तदा तद्वाक्यं ध्वनिरित्युच्यते । स्वार्थेऽविश्रान्तौ=अविश्रान्तमेव यद्यर्थान्तरबोधकं भवति तदा तादृगर्थान्तरं तात्पर्यमित्युच्यते न व्यङ्ग्यमिति व्यङ्ग्यतात्पर्ययो परस्परं भेद इत्यर्थ । ध्वनिनिरासवादी प्रत्याचष्टे–तन्नेति, तात्पर्यार्थबोधनं विना वाक्यस्य विश्रान्तेरसंभवात् तथा च यद्यत् प्रतिपाद्यते तत्सर्वं तात्पर्यार्थमेव भवतीति त्वदभिमतव्यङ्ग्यस्यापि तात्पर्यार्थतयापि ध्वनिर्नास्त्येवेत्यर्थ ॥ ३ ॥

प्रतिपाद्यस्य विश्रान्तिरपेक्षापूरणाद्यदि ।
वक्तुर्विवक्षिताप्राप्तेरविश्रान्तिर्न वा कथम् ॥ ६ ॥
पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता ।
वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते ॥ ७ ॥' इति ।

अतो न रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावः । किं तर्हि ? भाव्यभावकसंबन्धः, काव्यं हि भावकं भाव्या रसादयः, ते हि स्वतो भवन्त एव भावकेषु विशिष्टविभावादिमता काव्येन भाव्यन्ते ।

---

श्रोतुश्च विश्रब्धभ्रमणलक्षणशक्यार्थेनाप्याकाङ्क्षानिवृत्त्या तदतिरिक्तार्थविषयकजिज्ञासाया अनुत्थानात्, मम मते तु शक्यार्थमात्रबोधनेन वाक्यस्य विश्रान्तौ जातायां धर्मीविषयककुलटात्वज्ञानेन तदभिप्रायजिज्ञासया जातया वाक्य व्यञ्जनया भ्रमणनिषेधपरं भवतीति सिद्धं व्यङ्ग्यमित्यर्थः ॥ ५ ॥

ध्वनिनिरासवादी प्रत्युत्तरमाह—प्रतिपाद्यस्येति, अपेक्षापूरणात्=श्रोतुराकाङ्क्षानिवृत्त्या यदुक्तवाक्ये प्रतिपाद्यस्य विश्रान्तिरुच्यते तया च विश्रान्त्या भ्रमणनिषेधस्य व्यङ्ग्यत्वमुच्यते तदा वक्तुर्विवक्षितस्याऽप्राप्तेः=अलाभात्=अबोधनात् प्रतिपाद्यस्याऽविश्रान्तिरेव किं न स्याद् विनिगमनाविरहात् तथा च प्रतिपाद्यस्याविश्रान्तौ सत्यां तदतिरिक्तबुध्यमानार्थस्य तात्पर्यार्थत्वमेव भवतीति त्वयापि स्वीकृतत्वादुक्तस्थले भ्रमणनिषेधस्य तात्पर्यशक्त्यैव लाभसंभवाद् व्यञ्जनाव्यापारो व्यङ्ग्यं च न स्वीकार्यमित्यर्थ. ॥ ६ ॥

पौरुषेयस्येति—पौरुषेयस्य काव्यादिवाक्यस्य विवक्षापरतन्त्रता=विवक्षाधीनत्वाद् वक्त्रभिप्रेततात्पर्यम्=वक्त्रभिमततात्पर्यपरत्वमेव युक्तमिति त्वदभिमतव्यङ्ग्यार्थस्य तात्पर्यार्थत्वप्राप्त्या व्यङ्ग्यव्यञ्जनाव्यापारौ न स्वीकार्यावित्यर्थः । न च नाम्नि विवाद इतिवाच्यम्, तात्पर्यार्थस्य सकलसंमततात्पर्यशक्त्यैवावबोधात्, व्यङ्ग्यप्रतीत्यर्थं च व्यञ्जनाव्यापारस्वीकारापत्तेः । तथा च रसादयो भाव्याः काव्यं च भावकमिति तयोर्भाव्यभावकभाव एव संबन्धो न तु व्यङ्ग्यव्यञ्जकभाव इत्यर्थः ॥ ७ ॥

उपसंहरति—अत इति । रसादीनां काव्येन सह कस्तर्हि संबन्ध इति जिज्ञासते—किं तर्हीति । उत्तरमाह—भाव्येति । ते रसादयः । भावकेषु=भावकहृदये स्वतो भवन्तः=स्वयं सन्त एव विशिष्टविभावादिमता=अलौकिकविभावादिप्रतिपादकेन काव्येन भाव्यन्ते=उद्भाव्यन्ते इति ।

न चान्यत्र शब्दान्तरेषु भाव्यभावकलक्षणसम्बन्धाभावात् काव्यशब्देष्वपि तथा भाव्यमिति वाच्यम्—भावनाक्रियावादिभिस्तथाङ्गीकृतत्वात्। किं च मा चान्यत्र तथास्तु अन्वयव्यतिरेकाभ्यामिह तथावगमात् तदुक्तम्—

" भावाभिनयसम्बन्धान्भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभि॥ " इति।

कथं पुनरगृहीतसम्बन्धेभ्य: पदेभ्य: स्थाय्यादिप्रतिपत्तिरिति चेत्? लोके तथाविधचेष्टायुक्तस्त्रीपुंसादिषु रत्याद्यविनाभावदर्शनादिहापि तथोपनिबन्धे सति रत्याद्यविनाभूतचेष्टादिप्रतिपादकशब्दश्रवणादभिधेयाऽविनाभावेन लाक्षणिकी रत्यादिप्रतीति। यथा च काव्यार्थस्य रसभावकत्वं तथाग्रे वक्ष्याम।

---

शङ्कते—न चेति। तथा=भाव्यभावकसंबन्धाभावेन भाव्यम्=भवितव्यमित्यर्थ। परिहारमाह—भावनेति भावनैव क्रियेतिवादिभिर्मीमांसकैर्भाव्यभावकसंबन्धस्य स्वीकृतत्वात्, तत्र स्वर्गादीनां भाव्यत्वं यागादिक्रियायाश्च भावकत्वमिति प्रतिपादितत्वादित्यर्थ, तथा च काव्यपक्षेऽपि भाव्यभावकसंबन्धस्य नानुपपत्तिरिति भाव। उक्तमभ्युपगम्याह—किं चेति, अन्यत्र=लोके, तथा=भाव्यभावकसंबन्ध। इह काव्ये त्वऽन्वयव्यतिरेकाभ्यां तथागमात्=भाव्यभावकसंबन्धोऽवगम्यते एवेत्यर्थ। रसादिबोधकपदानुपादानस्थले प्रकारान्तरेण रसादिप्रतीतेरसंभवात् किं वा भावकचेतसि वर्तमानरत्यादिना काव्यस्य संबन्धान्तरासंभवादिति भाव। भावेति—भावेनाऽभिनयेन च किं वा भावस्याभिनयेन संबन्धो येषां तादृशान् रसान् भवयन्तीति भावा। नाट्ययोक्तृभि=नाट्यप्रयोक्तृभि। प्रमाणमिदं न प्रकृतार्थसमवायि प्रतिभाति किं वा भावकत्वेन काव्यस्यापि भावपदवाच्यत्वं मन्तव्यमिति।

शङ्कते—कथमिति, अगृहीतसंबन्धेभ्य=रत्यादावऽगृहीतशक्तिकेभ्य पदेभ्य कथं रत्यादिप्रतीति: स्यात्? तत्र गृहीतशक्तिकादेव पदात् तदर्थप्रतीतिसंभवात् शक्तिग्रहस्य कारणत्वादित्यर्थ। उत्तरमाह—लोके इति, तथाविधचेष्टा=तत्तदनुभावानुभाव। इहापि=काव्येऽपि। अभिधेयाविनाभावेन=वाच्यचेष्टा (अनुभावा) द्यविनाभावेन रत्यादिकं विना तादृग्चेष्टादेरसंभवादिति भाव। लाक्षणिकीति—भूयमाणतादृगचेष्टादिप्रतिपादकशब्दानां तत्तत्प्रतिपादकत्वेन सम्भवन् रत्यादौ लक्षणा। स्पष्टमन्यत्॥ ३७॥

रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात् ।
नानुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः ॥ ३८ ॥
द्रष्टुः प्रतीतिर्व्रीडेर्ष्यारागद्वेषप्रसङ्गतः ।
लौकिकस्य स्वरमणीसंयुक्तस्येव दर्शनात् ॥ ३९ ॥

काव्यार्थोपप्लावितो रसिकवर्ती रत्यादिः स्थायीभावः स इति प्रतिनिर्दिश्यते, स च स्वाद्यतां निर्भरानन्दसंविदात्मतामापाद्यमानो रसो रसिकवर्तीति वर्तमानत्वात्, नानुकार्यरामादिवर्ती वृत्तत्वात्तस्य ।

अथ शब्दोपहितरूपत्वेनावर्तमानस्यापि वर्तमानवदवभासनमिष्यत एव, तथापि तदवभासस्यास्मदादिभिरननुभूयमानत्वादसत्समतैवाऽऽस्वादं प्रति, विभावत्वेन तु रामादेर्वर्तमानवदवभासनमिष्यत एव । किं च न काव्यं रामादीनां रसोपजननाय कविभिः प्रवर्त्यते अपि तु सहृदयानानन्दयितुम् । स च समस्तभावकस्वसंवेद्य एव ।

यदि चानुकार्यस्य रामादेः शृङ्गारः स्यात्ततो नाटकादौ तद्दर्शने लौकिक इव नायके शृङ्गारिणि स्वकान्तासंयुक्ते दृश्यमाने शृङ्गारवानयमिति प्रेक्षकाणां प्रतीतिमात्रं भवेन्न रसानां स्वादः, सत्पुरुषाणां च लज्जा, इतरेषां त्वसूयानुरागापहारेच्छादयः प्रसज्येरन् । एवं च सति रसादीनां व्यङ्ग्य-

रसिकस्यैवेति–रसिकस्यैव सामाजिकस्य रसास्वादो भवतीत्यर्थः । काव्यार्थोपप्लावितः=काव्यार्थेनोद्भावितः । स इतिपदेनोक्तमूलपद्ये स्थायी प्रतिनिर्दिश्यते इत्यर्थः । तस्य=अनुकार्यस्य श्रीरामादेः ।

अथेति–यद्यपीत्यर्थः । शब्दोपहितरूपत्वेन=शाब्दत्वेन शब्दोपस्थितरूपत्वेनेति-यावत् । तथा च "नानुकार्यस्य" इत्यादिकमयुक्तमिति भावः । उत्तरमाह–तथापीति । तदवभासस्य=अनुकार्यश्रीरामादिप्रतीतेरस्मदादिभिरननुभूयमानत्वादाऽऽस्वादं प्रत्यनुकार्यस्याऽसत्त्वमेवेत्यर्थः । "अनुभूयमानत्वात्" इतिपाठस्त्वयुक्त एव । सः=रसः ॥ ३८ ॥

द्रष्टुरित्यादिपद्यं व्याचष्टे–यदि चेत्यादिना, "न रसास्वादः" इत्यन्तेन "प्रतीति." इति पदं व्याख्यातम्, असूयेति–'अनेनेयं सुन्दरी कथमुपलब्धा' इत्यसूया । तादृशनायिकायां रागः=अनुरागश्चापि प्रसज्येत, तादृशनायिकाया अपहारेच्छापि स्यादिति नानुकार्यस्य रसः किं तु सामाजिकस्यैवेत्यर्थः । उपसंहरति–एवं चेति ।

त्वमपास्तम् । अन्यतो लब्धसत्ताकं वस्त्वन्येनापि व्यज्यते प्रदीपेनेव घटादि न तु तदानीमेवाभिव्यञ्जकत्वाभिमतैरापाद्यस्वभावम् । भाव्यन्ते च विभावादिभिः प्रेक्षकेषु रसा इत्यावेदितमेव ।

ननु च सामाजिकाश्रयेषु रसेषु को विभावः कथं च सीतादीनां देवीनां विभावत्वेनाऽविरोध ? उच्यते—

**धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः ।**
**विभावयति रत्यादीन्स्वदन्ते रसिकस्य ते ॥ ४० ॥**

नहि कवयो योगिन इव ध्यानचक्षुषा ध्यात्वा प्रातिस्विकीं रामादीनामवस्थामितिहासवदुपनिबध्नन्ति, किं तर्हि ? सर्वलोकसाधारणा स्वोत्प्रेक्षाकृतसंनिधीः धीरोदात्ताद्यवस्थाः क्वचिदाश्रयमात्रदायिनीः (वि)दधति ।

**ता एव च परित्यक्तविशेषा रसहेतवः ।**

तत्र सीतादिशब्दाः परित्यक्तजनकतनयादिविशेषाः स्त्रीमात्रवाचिनः किमिवानिष्टं कुर्युः । किमर्थं तर्ह्युपादीयन्त इति चेत् ? उच्यते—

---

रसादीनां व्यङ्ग्यत्वेऽनुपपत्तिमाह—अन्यत इति, अभिव्यञ्जनात्पूर्वमेव लब्धसत्ताकं वस्त्वऽन्येनाभिव्यज्यते यथा प्रदीपेन घट, रसश्च न पूर्वं लब्धसत्ताक इति कथमभिव्यञ्जकत्वेनाभिमतैरभिव्यज्येतेत्यर्थ । आपाद्यस्वभावम्=उत्पाद्यसत्ताकम्। भाव्यन्ते—उद्भाव्यन्ते इत्यनेन विभावादिभ्य पूर्वमसतो रसस्य प्रत्याख्याता—विभावादिसंयोगेनैव स्थायिन रसत्वापत्तिस्वीकारादिति नाभिव्यङ्ग्यत्वं संभवतीत्यर्थ ।

शङ्कते—नन्विति । अविरोध इति—साधारणीकृतानामेव विभावत्वं भवति श्रीसीतादीनां च जगज्जननीनां कथं सकलरसिकसाधारण्येन शृङ्गाराद्यालम्बनत्वं स्यादितिभाव । उत्तरमाह—धीरोदात्तेति धीरोदात्ताद्यवस्थानां प्रतिपादक अभिनायक श्रीरामादी रत्यादीन् विभावयति ते=रत्यादयो रसिकस्य स्वदन्ते=आस्वादगोचरा भवन्तीत्यर्थ । प्रातिस्विकीम्=श्रीरामादिमात्रसंबद्धाम्। स्वोत्प्रेक्षाकृतसंनिधी= स्वोत्प्रेक्षाकृत संनिधिरुपस्थितिर्यासां वा स्वोत्प्रेक्षाकृतसंनिधी स्वसंभाविता इति यावत् । क्वचिदाश्रयमात्रदायिनी=क्वचिद् इत्यमात्रोपकारादालम्बना । विदधति=उपनिबध्नन्ति कवय ॥ ४० ॥

ता=सीत्याद्या । परित्यक्तविशेषा=साधारणीकृता असम्बन्धा नायिकादिरूपेणोपस्थिता ।

क्रीडतां मृण्मयैर्यद्वद्बालानां द्विरदादिभिः ॥ ४१ ॥
स्वोत्साहः स्वदते तद्वच्छ्रोतॄणामर्जुनादिभिः ।

एतदुक्तं भवति—नात्र लौकिकशृङ्गारादिवरुख्यादिविभावादीनामुपयोगः, किं तर्हि? प्रतिपादितप्रकारेण लौकिकरसविलक्षणत्वं नाट्यरसानाम्। यदाह—"अष्टौ नाट्यरसाः स्मृताः" इति ।

काव्यार्थभावनास्वादो नर्तकस्य न वार्यते ॥ ४२ ॥

नर्तकोऽपि न लौकिकरसेन रसवान् भवति तदानीं भोग्यत्वेन स्वमहिलादेरग्रहणात् काव्यार्थभावनया त्वस्मदादिवत्काव्यरसास्वादोऽस्यापि न वार्यते ।

कथं च काव्यात्स्वानन्दोद्भूतिः किमात्मा चासाविति व्युत्पाद्यते—

स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः ॥ ४३ ॥
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ॥ ४४ ॥
अतस्तज्जान्यता तेषामत एवावधारणम् ।

काव्यार्थेन=विभावादिसंसृष्टस्थाय्यात्मकेन भावकचेतसः संभेदे=अ-

---

वस्तुतस्तु मध्ये स्मृतिव्यापारोऽपि स्वीकार्यस्तथा च काव्यं श्रुत्वा नाट्यं च दृष्ट्वा तदानुकूल्येन स्वकीयप्रियतमादिकं स्मृत्वा रसास्वादोऽनुभूयते इति स्वीकार्यं न चैवं व्रीडादेरापत्तिः–प्रियतमादेर्बाह्योपस्थितेरभावादिति मे रोचते इत्यलमत्र स्वमतसंस्थापनप्रयासेन ।

श्रोतॄणामर्जुनादिभिः सह स्वोत्साहः स्वदते यत इति हेतोरर्जुनादय उपादीयन्ते इत्येव प्रकृतेनान्वयः। लौकिकरसवैलक्षण्यादेव नायिकादीनां स्वीयत्वेनोपस्थितेरपेक्षा न भवति काव्ये इत्यर्थः ।

यदि नर्तकस्यापि काव्यार्थभावनया=काव्यार्थैकतानतया ( रसिकत्वे सतीतियावत् ) रसास्वादः संभवति (न तु रसिकत्वाभावेऽपि) तदा तु सामाजिकानुरञ्जनमेव फलम् ॥ ४२ ॥

स्वाद इति–काव्यार्थसंभेदाद् य आत्मानन्दसमुद्भवः स स्वादपदार्थः, स च स्वादः शृङ्गारवीरबीभत्सरौद्रेषु क्रमाद् मनसो विकासविस्तरक्षोभविक्षेपैः चतुर्विधो विज्ञेय इत्यन्वयः। काव्यार्थपदार्थमाह–काव्यार्थेनेति, विभावादिसंसृष्टेन=विभावादियुक्तेन। संभेदपदार्थमाह–संभेद इति, अन्योन्यसंवलने हि

न्योन्यसवलने प्रत्यस्तमितस्वपरविभागे सति प्रबलतरस्वानन्दोद्भूति स्याद्, तस्य च सामान्यात्मकत्वेऽपि प्रतिनियतविभावादिकारणजन्येन सभेदेन चतुर्धा चित्तभूमयो भवन्ति तद्यथा—शृङ्गारे विकास, वीरे विस्तर, बीभत्से क्षोभ., रौद्रे विक्षेप इति। तदन्येषा चतुर्णां हास्याद्भुतभयानककरुणाना स्वसामग्रीलब्धपरिपोषाणा त एव चत्वारो विकासाद्याश्चेतस सभेदा अत एव—

"शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रस।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानक ॥"

इति हेतुहेतुमद्भाव एव सभेदापेक्षया दर्शितो न कार्यकारणभावाभिप्रायेण तेषा कारणान्तरजन्यत्वात्।

"शृङ्गारानुकृतिर्या तु स हास्य इति कीर्तित ।"

इत्यादिना विकासादिसभेदैकत्वस्यैव स्फुटीकरणात्, अवधारणमप्यत एव "अष्टौ" इति—सभेदान्तराणामभावात्।

---

अनुकार्यचित्तावस्थासदृशावस्थाव त्वम्। सवलनस्य सभेदस्य वा विशेषणमाह प्रत्यस्तमितेति। प्रत्यस्तमित =नष्ट स्वपरविभागो यत्रैतादृशे सति। तस्य—आस्वादस्य सामान्यात्मकत्वेपि=सकलरससाधारणत्वेऽपि, उक्तसभेदो हि तत्तद्रससबन्धित्वेन प्रतिनियतैरेव विभावादिभिर्जायते यथा शृङ्गारे चन्द्रच दनादिभिरिति प्रतिनियतविभावादिकारणजन्यसभेदवशाद विकासादिलक्षणाश्चतुर्विधा चित्तभूमय सभवन्तीत्यन्वय। हास्येत्यादिमूल व्याचष्टे—तदन्येषामिति, सभेदा इति—उक्तसभेदेन चेतसो विकासादयो जायन्ते इति कार्यकारणयोरैक्योपचारादत्र विकासादे सभेदत्वमुक्त किंवा 'सभेदा' इत्यत्र 'भेदा' इत्येव पाठ। अत एव चित्तभूमीनां विकासादिलक्षणचातुर्विध्यादेव। चेतसो विकासाद्यवस्थानां शृङ्गाराद्यवरुद्धत्वाद् अवस्थान्तराणां चानुपलम्भात् शृङ्गारादिभ्य एव हास्यादीनाह—शृङ्गाराद्धीति। लोकेऽपि शृङ्गारेण हास्य, रौद्रेण करुण —रौद्रस्य करुणपर्यवसायित्वात्, वीरस्य चाद्भुतपर्यवसायित्वात्, बीभत्सस्य च भयपर्यवसायित्वात् शृङ्गाराद्धीत्युक्तं वेदितव्यम्। इति हेतुहेतुमद्भाव इति—' शृङ्गाराद्धि भवेद्धास्य ' 'अतस्तज्जन्यता तेषाम् ' इत्येव प्रदर्शितो हेतुहेतुमद्भाव सभेदापेक्षयैव दर्शितो न तु कार्यकारणभावापेक्षया तेषां हास्यादीनां स्वकीयविभावादिलक्षणकारणान्तरजन्यत्वात् शृङ्गाराद्यऽजन्यत्वाच्चेत्यन्वय। परानुकरणेन हास्य जायते इत्युक्तम्—" शृङ्गारानुकृति " इति। स्फुटीकरणादिति—शृङ्गारे यदि चित्तवृत्तेर्विकासो भवति तदा

ननु च युक्तं शृङ्गारवीरहास्यादिषु प्रमोदात्मकेषु वाक्यार्थसंभेदादानन्दोद्भव इति, करुणादौ तु दुःखात्मके कथमिवासौ प्रादुःष्यात्? तथाहि—तत्र करुणात्मककाव्यश्रवणाद्दुःखाविर्भावोऽश्रुपातादयश्च रसिकानामपि प्रादुर्भवन्ति न चैतदानन्दात्मकत्वे सति युज्यते। सत्यमेतत्, किं तु तादृश एवासावानन्दः सुखदुःखात्मको यथा प्रहरणादिषु सम्भोगावस्थायां कुट्टमिते स्त्रीणाम्, अन्यश्च लौकिकात्करुणात्काव्यकरुणः, तथा ह्यत्रोत्तरोत्तरा रसिकानां प्रवृत्तयः। यदि च लौकिककरुणवद्दुःखात्मकत्वमेवेह स्यात्तदा न कश्चिदत्र प्रवर्तेत ततः करुणैकरसानां रामायणादिमहाप्रबन्धानामुच्छेद एव भवेत्। अश्रुपातादयश्चेतिवृत्तवर्णनाऽऽकर्णनेन विनिपातितेषु लौकिकवैक्लव्यदर्शनादिवत् प्रेक्षकाणां प्रादुर्भवन्तो न विरुध्यन्ते तस्माद्रसान्तरवत्करुणस्याप्यानन्दात्मकत्वमेव।

शान्तरसस्य चाऽनभिनेयत्वाद् यद्यपि नाट्येऽनुप्रवेशो नास्ति तथापि सूक्ष्मातीतादिवस्तूनां सर्वेषामपि शब्दप्रतिपाद्यताया विद्यमानत्वात् काव्यविषयत्वं न निवार्यते अतस्तदुच्यते—

शमप्रकर्षोऽनिर्वाच्यो मुदितादेस्तदात्मता ॥ ४५ ॥

शान्तो हि यदि तावत्—

---

शृङ्गारानुकरणेऽपि चित्तवृत्तेर्विकास एव प्राप्तः शृङ्गारानुकरणं च हास्य इति हास्येऽपि चित्तवृत्तेर्विकास एव प्राप्त इत्यर्थः। किं वा विकाससाम्येनैव हास्यस्य शृङ्गारानुकृतित्वमुक्तमित्यभिप्रायः। अष्टाविति—प्रत्येकस्य विकासादिसंभेदस्य रसद्वयेन सम्बन्धादष्टौ रसाः—संभेदानां चतुस्संख्याकत्वादित्यर्थः।

ननु च—नन्विति। असौ—आनन्दः। प्रादुःष्यात्—प्रादुर्भवेत्। पूर्वपक्षी स्वाभिप्रायमुपपादयति—तथा हीति। एतत्—अश्रुपातादि। उत्तरमाह सिद्धान्ती—सत्यमित्यादिना। तथा हि—आनन्दात्मकत्वादेव। विनिपातितेषु—दुःखप्राप्तेषु। वैक्लव्यं शोकावेगः, यथा लोके दुःखितदुःखश्रवणादश्रुपातादयो भवन्ति यथा च लोकेऽपि दुःखितदर्शनार्थं प्रवृत्तिस्तथा करुणकाव्येऽपि विभाव्यम् ॥ ४४ ॥

"शममपि केचित् प्राहुः" इत्युक्तं सिंहावलोकनन्यायेन संप्रति परामृशति शम इति, अनिर्वाच्यः वक्तुमशक्यः शमप्रकर्ष एव शान्तरसः, मुदितादिभ्यश्च

"न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।
रसस्तु शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥ "

इत्येवंलक्षणस्तदा तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात्, तस्य च स्वरूपेणानिर्वचनीयता श्रुतिरपि-"स एष नेति नेति" इत्यन्यापोहरूपेणाह । न च तथाभूतस्य शान्तरसस्य सहृदयाः स्वादयितारः सन्ति, अथापि तदुपायभूतो मुदितामैत्रीकरुणोपेक्षादिलक्षणस्तस्य च विकासविस्तारक्षोभविक्षेपरूपतैवेति तदुक्त्यैव शान्तरसास्वादो निरूपितः ।

इदानीं विभावादिविषयाशान्तरकाव्यव्यापारप्रदर्शनपूर्वकः प्रकरणेनोपसंहारः प्रतिपाद्यते—

पदार्थैरिन्दुनिर्वेदरोमाञ्चादिस्वरूपकैः ।
काव्याद्विभावसंचार्यनुभावप्रख्यतां गतैः ॥ ४६ ॥
भावितः स्वदते स्थायी रसः स परिकीर्तितः ।

अतिशयोक्तिरूपकाव्यव्यापाराहितविशेषैश्चन्द्राद्यैरुद्दीपनविभावैः प्रमदाप्रभृतिभिरालम्बनविभावैर्निर्वेदादिभिर्व्यभिचारिभावै रोमाञ्चाश्रुभ्रू-

---

तदात्मता=तस्य शान्तरसस्यात्मलाभो जायते इत्यर्थः । अपोह =अतद्व्यावृत्ति स्तत्र तद्भिन्नमतद् व्यावृत्तिश्च भेदपदार्थ इति तद्भिन्नेभ्यो भिन्नत्वमपोहः, तद्भिन्नेभ्यो भिन्न च तदेव भवति तथा चात्र शान्तातिरिक्तसकलरसेभ्यः शान्तस्य विलक्षणत्वमुपपादित भवतीत्यर्थः । किं वा अन्यापोहरूपेण=अन्यनिषेधरूपेणाहेत्यर्थः । सहृदयपदेन चात्र वैषयिकाः सहृदया ग्राह्याः । सन्ति=संभवन्ति । लौकिकरसास्वादपरत्वादितिशेषः । शान्तरसास्वादं निरूपयति-अथापीति । यद्यप्यनिर्वचनीयस्य निरूपण न संभवति तथापीत्यर्थः । तदुपायभूतः=शान्तोपायभूतः । मुदितेति " मैत्रीकरुणामुदितोपेक्षाणा सुखदुःखपुण्यापुण्यविषयाणा भावनातश्चित्तप्रसादनम् " इतियोगसूत्रम् । तस्य=मुदितादेः । तदुक्त्यैव=उक्तविकासाद्युक्त्यैव । हेतुभूतमुदितादेश्चित्तविकासादिरूपत्वेन तत्सपन्नशान्तस्यापि चित्तविकासादिरूपत्व प्राप्तमित्यर्थ. । मुदितादौ विकासादेर्यथासख्यमन्वय॰, मैत्र्यां विस्तार औदार्यमेव, करुणायां क्षोभो दु खित्वम्, उपेक्षायामुपेक्षणीयविषयापेक्षया निक्षेपश्चित्तस्य स्पष्ट एवेत्यनुसधेयम् । स्पष्टमन्यत् ॥ ४५ ॥

इदानीमिति-विभावादिविषयको योऽवान्तरः काव्यव्यापारो विभावादिप्रतिपादन तत्प्रदर्शनपूर्वक इत्यर्थ॰ । इन्द्वादयो विभावा निर्वेदादयो व्यभिचारिणो रोमाञ्चादयश्चानुभावा एते वाक्यार्थभूतस्य रसस्य पदार्थस्थानीया रसस्यैतत्सम-

गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि संपादिता-
स्तत्त्वौघानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः ॥"

कालविभावो यथा कुमारसंभवे—

"असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन चापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण ॥'

इत्युपक्रमे—

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥"

वेषविभावो यथा तत्रैव—

"अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥"

उपभोगविभावो यथा—

"चक्षुर्लुप्तमषीकणं कवलितस्ताम्बूलरागोऽधरे
विश्रान्ता कवरी कपोलफलके लुप्तेव गात्रद्युतिः ।
जाने संप्रति मानिनि प्रणयिना कैरप्युपायक्रमै-
र्भग्नो मानमहातरुस्तरुणि ते चेतःस्थलीवर्धितः ॥"

---

" व्यञ्जनधातोः पुष्प बल—तल—निष्कोटितमथोद्घृष्टम् ।
रेफाऽनुबन्धसञ्ज्ञेऽनुस्वनित बिन्दुरवमृष्टम् ॥
इतिदशविधः प्रयोज्यो वीणायां व्यञ्जको धातुः ।
इत्येते धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः ॥ " इति ।

लयः पूर्वं व्याख्यातः । द्रुतमध्यविलम्बितैः परिच्छिन्न इत्यर्थः । यतय इति—उक्तं च संगीतरत्नाकरपञ्चमे—

" लयप्रवृत्तिनियमो यतिरित्यभिधीयते ।
समा स्रोतोगता चान्या गोपुच्छा त्रिविधेति सा ॥ " इति ।

वाद्यविधय—वादनप्रकारास्त्रयस्तदुक्तं संगीतरत्नाकरषष्ठे—

" तत्त्वं भवेदनुगतमोघश्चेति त्रिधा मतम्
गीतानुगं त्रिप्रकारं वाद्यं तज्ज्ञैः प्रकल्प्यते ॥ " इति ।

स्पष्टमन्यत् ॥ ४८ ॥

प्रमोदात्मा रतिर्यथा मालतीमाधवे—

"जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥"

युवतिविभावो यथा मालविकाग्निमित्रे—

"दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसः स्पृष्टं तथास्या वपुः ॥"

यूनोर्विभावो यथा मालतीमाधवे—

"भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठा लुलितललितैरङ्गकैस्ताम्यतीति ॥"

अन्योन्यानुरागो यथा तत्रैव—

"यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥"

मधुराङ्गविचेष्टितं यथा तत्रैव—

"स्तिमितविकसितानामुल्लसद्भ्रूलताना
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किंचिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥"

---

यूनोर्विभाव इति मन्ये विदुषामुपहासाय, युगलविभाव इत्यर्थे "भूयो भूयः" इत्यनेनोभयोरेव मालतीमाधवयोरुपनिबन्धादिति ।

अन्योन्यानुराग इति—"यान्त्या" इत्यत्र माधवेन स्वमन्येनानुरागस्तु मुक्तैवोक्त, "वलितकन्धरमाननम्" इत्यनेनोक्ततिर्यङ्निरीक्षणेन मालतीसमवेतोऽप्यनुराग उपनिबद्ध इत्यन्योन्यानुरागः ।

क्षेपकटाक्षाद्यैरनुभावैरवान्तरव्यापारतया पदार्थीभूतैर्वाक्यार्थः स्थायी-भावो विभावितः=भावरूपतामानीतः स्वदते स रस इति प्राक्प्रकरणे तात्पर्यम् ।

विशेपलक्षणान्युच्यन्ते, तत्राचार्येण स्थायिनां रत्यादीनां शृङ्गारा-दीनां च पृथग्लक्षणानि विभावादिप्रतिपादनेनोदितानि, अत्र तु—

**लक्षणैक्यं विभावैक्यादभेदाद्रसभावयोः ॥ ४७ ॥**

क्रियत इति वाक्यशेषः ।

तत्र तावच्छृङ्गारः—

**रम्यदेशकलाकालवेषभोगादिसेवनैः ।**
**प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः ।**
**प्रहृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ॥ ४८ ॥**

इत्थमुपनिबध्यमानं काव्यं शृङ्गारास्वादाय प्रभवतीति कव्युपदेश-परमेतत् ।

---

स्थिरूपत्वादित्यन्वयः । काव्ये च तेषां चन्द्रादीना यथासंख्यं विभावादिसंज्ञा भवतीत्याह—काव्यादिति । भावितः=पुष्टिं प्रापितः । सः=स एव रस इत्युच्यते। आहितविशेपैः=प्राप्तविशेपैः चमत्कारिता प्रतीतिरिति यावत् । अवान्तरव्यापारतया= अवान्तरव्यापारविपयतया, अवान्तरशब्दव्यापारविपयस्य पदार्थत्वस्वीकारात् प्रधा-नशब्दव्यापारविपयस्य च वाक्यार्थत्वस्वीकारादितिभाव. । भावरूपताम्=विपुला-स्वादयोग्यताम् । स रसः=स एव रस इत्युच्यते प्राक्प्रकरणे=उत्तरसप्रकरणे-नान्वय इत्यर्थः । कटाक्षलक्षण चोक्त संगीतरत्नाकरसप्तमे—

" यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् ।
तारकायाः कलाभिज्ञास्तं कटाक्ष प्रचक्षते " इति ।

लक्षणैक्यमिति—रसतत्स्थायिनोः समानमेव लक्षण ज्ञेयम्—विभावैक्येनाऽभे-दादित्यर्थः अत्र विभावादीनामेव भेदकत्वात्, विभावादिपरिपुष्टा रतिरेव शृङ्गार इत्युच्यते एवं सर्वत्र ॥ ४७ ॥

रम्येति—यूनोरन्योन्यरक्तयोः प्रमोदात्मा या रतिः सैव मधुराङ्गविचेष्टितैः प्रहृष्यमाणा=पुष्टा सती शृङ्गार इत्युच्यते इत्यन्वयः ॥

इत्थम्=एव प्रकारेण । तादृशः प्रकारश्च गुरोरेवावगन्तव्य इत्यर्थः ।

तत्र देशविभावो यथोत्तररामचरिते—

"स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।
स्मरसि सरसतीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥"

कलाविभावो यथा—

"हस्तैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासैर्लयमुपगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयः षड्विकल्पोऽनुवृत्तै-
र्भावे भावे नुदति विषयान् रागबन्धः स एव ॥"

यथा च—

"व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः ।

---

हस्तैरिति—अन्तर्निहितवचनैः=आकारविशेषविशिष्टत्वेनार्थविशेषव्यञ्जकैः । पादन्यासैः=नृत्यान्तर्गतपादविन्यासैर्लयमुपगतः=प्राप्त, रसेषु तन्मयत्वम्=रसमयत्वं चोपगतः । लय इति—उक्तं च सगीतरत्नाकरपञ्चमे—

" क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः ।
द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः ।
द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बितौ ॥ " इति ।

शाखेति—उक्तं च संगीतरत्नाकरसप्तमारम्भे—

" विहाय श्रोत्रमभिनयानाऽऽङ्गिकोऽथाभिधीयते ।
तस्य शाखाङ्कुरौ नृत्तं प्रधानं त्रितयं मतम् ।
तत्र शाखेति विख्याता विचित्रा करवर्तना ॥ " इति ।

शाखा योनिः=उत्पत्तिस्थानं यस्य स शाखायोनिरभिनयः । षड्विकल्पश्च षड्विध इति, उक्तं च भरतेन—

" आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्राश्चतुर्धा परिकल्पितः ।
त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो मुखजस्तथा ।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ " इति

अनुवृत्तेरिति हस्तपादन्यासयोर्विशेषणं संभवति । स्पष्टमन्यत् ॥ १ ॥

स्वलितेति—स्वलित=प्रस्खलन । स्तम्भनानुवृत्ते—उक्तं च भरतेनैकोन-त्रिंशाध्याये—

ये सत्त्वजाः स्थायिन एव चाष्टौ
निंशत्रयो ये व्यभिचारिणश्च ।
एकोनपञ्चाशदमी हि भावा
युक्त्या निबद्धाः परिपोषयन्ति । ( स्थायिनम् )
आलस्यमौग्र्यं मरणं जुगुप्सा
तस्याश्रयाद्वैतविरुद्धमिष्टम् ॥ ४९ ॥

त्रयस्त्रिंशद्व्यभिचारिणश्चाष्टौ स्थायिन अष्टौ सात्त्विकाश्चेत्येकोनपञ्चाशत् । युक्त्या=अङ्गत्वेनोपनिबध्यमानाः शृङ्गारं संपादयन्ति । आलस्यौग्र्यजुगुप्सामरणादीन्येकालम्बनविभावाश्रयत्वेन साक्षादङ्गत्वेन चोपनिबध्यमानानि विरुध्यन्ते । प्रकारान्तरेण चाऽविरोधः प्राक्प्रतिपादित एव ।

विभागस्तु ( शृङ्गारस्य )—

अयोगो विप्रयोगश्च संभोगश्चेति स त्रिधा ।

अयोगविप्रयोगविशेषत्वाद्विप्रलम्भस्यैतत्सामान्याभिधायित्वेन विप्रलम्भशब्द उपचरितवृत्तिर्मा भूदिति न प्रयुक्तः, तथा हि—दत्त्वा संकेतमप्राप्तेऽवधतिक्रमे साध्येन नायिकान्तरानुसरणाच्च विप्रलम्भशब्दस्य मुख्यप्रयोगो वञ्चनार्थत्वात् ।

---

आलस्येति–यत्रालस्य तत्रौग्र्यमयुक्तमित्यर्थः । एकालम्बनविभावाश्रयत्वेन=एकव्यक्तिगतत्वेन । प्रकारान्तरेण=भावान्तरव्यवधानेनेति स्मर्तव्यम् ॥ ४९ ॥

ननु विप्रयोगविप्रलम्भपदयो पर्यायत्वाद् विप्रयोगपदस्थाने विप्रलम्भ पद किं न प्रयुक्तमित्याशङ्क्याह–अयोगेति । अयोगविप्रयोगौ विप्रलम्भस्यैवाऽवान्तरविशेषाविति हेतौ एतत्सामान्याभिधायित्वेन=अयोगविप्रयोगसामान्यवाचकत्वेन । विप्रयोगपदस्थले विप्रलम्भपदे प्रयुक्ते तद्विप्रलम्भपद विप्रयोगे लाक्षणिकमेव स्यात्–विप्रलम्भपदस्य सामान्यतोऽयोगविप्रयोगोभयपरत्वादत्र चाऽयोगस्य पृथगुक्तत्वात् सामान्यवाचकशब्दाना विशेषे लक्षणास्वीकारादित्यर्थ । साध्येन=नायकेन । दत्त्वा सकेतमप्राप्त्यादिस्थले विप्रलम्भशब्दस्य मुख्यतया प्रयोगो भवति विप्रलम्भशब्दस्य वञ्चनार्थत्वादित्यर्थ ।

तत्राऽयोगोऽनुरागेऽपि नवयोरेकचित्तयोः ॥ ५० ॥
पारतन्त्र्येण दैवाद्वा विप्रकर्षादसंगमः ।

योगोऽन्योन्यस्वीकारस्तदभावस्त्वऽयोगः—पारतन्त्र्येण विप्रकर्षाद्दैव-पित्राद्यायत्तत्वात्सागरिकामालत्योर्वत्सराजमाधवाभ्यामिव दैवाद्गौरीशिवयोरिवाऽसमागमोऽयोगः ।

दशावस्थः स तत्रादावभिलाषोऽथ चिन्तनम् ॥ ५१ ॥
स्मृतिर्गुणकथोद्वेगप्रलापोन्मादसंज्वराः ।
जडता मरणं(१०)चेति दुरवस्थं यथोत्तरम् ॥ ५२ ॥
अभिलाषः स्पृहा तत्र कान्ते सर्वाङ्गसुन्दरे ।
दृष्टे श्रुते वा तत्रापि विस्मयानन्दसाध्वसाः ॥ ५३ ॥
साक्षात्प्रतिकृतिस्वप्नच्छायामायासु दर्शनम् ।
श्रुतिर्व्याजात्सखीगीतमागधादिगुणस्तुतेः ॥ ५४ ॥

अभिलाषो यथा शाकुन्तले—

"असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥"

विस्मयो यथा—

"स्तनावालोक्य तन्वङ्ग्याः शिरः कम्पयते युवा ।
तयोरन्तरनिर्मग्नां दृष्टिमुत्पाटयन्निव ॥"

---

अन्योन्यस्वीकारः=परस्परसमागमः ॥ ५० ॥

सः=अयोगः । तत्र=अयोगे ।

उक्तं च "दृङ्मनस्सङ्गसङ्कल्पा जागरः कृशताऽरतिः ।
ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥ " इति ॥ ५२ ॥

अभिलाष इति—तत्र=उक्तेषु मध्ये, कान्ते सर्वाङ्गसुन्दरे दृष्टे वा श्रुते वा या स्पृहा स एवाभिलाषः, तत्र=अभिलाषे विस्मयादयो भवन्तीत्यन्वयः । उक्तं च—" दृष्टे श्रुतेऽभिलाषाच्च किं नौत्सुक्यं प्रजायते " इति । दर्शनप्राप्तिप्रकारानाह—साक्षादिति । प्रतिकृतिः=चित्रपटः ।

श्रवणप्रकारानाह—श्रुतिरिति । व्याजात्=द्वारा ॥ ५४ ॥

आनन्दो यथा विद्धशालभञ्जिकायाम्—

"सुधाबद्धग्रासैरुपवनचकोरैः कवलिता
किरञ्ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्राकारा‍ग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥"

साध्वसं यथा कुमारसंभवे—

"तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥"

यथा वा—

"व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥"

**सानुभावविभावास्तु चिन्ताद्याः पूर्वदर्शिताः ।**

गुणकीर्तनं तु स्पष्टत्वान्न व्याख्यातम् ।

**दशावस्थत्वमाचार्यैः प्रायोवृत्त्या निदर्शितम् ॥ ५५ ॥**

**महाकविप्रबन्धेषु दृश्यते तदनन्तता ।**

दिङ्मात्रं तु—

**दृष्टे श्रुतेऽभिलाषाच्च किं नौत्सुक्यं प्रजायते ॥ ५६ ॥**

**अप्राप्तौ किं न निर्वेदो ग्लानिः किं नातिचिन्तनात् ।**

शेषं प्रच्छन्नकामितादि कामसूत्रादवगन्तव्यम् ।

अथ विप्रयोगः—

**विप्रयोगस्तु विश्लेषो रूढविस्रम्भयोर्द्विधा—॥ ५७ ॥**

**मानप्रवासभेदेन. मानोऽपि प्रणयेर्ष्ययोः ।**

---

पूर्वम्=व्यभिचारिप्रकरणे ।

न व्याख्यातम्=पृथक्त्वेन न लक्षितमित्यर्थः ।

प्रायोवृत्त्या=प्रायोवादेन । तदनन्तता=कामावस्थानन्तता ॥ ५६ ॥

रूढविस्रम्भयोः=रूढः=उद्गतो विस्रम्भः=प्रणयो ययोस्तयोर्नायिकानायकयोरित्यर्थः "विस्रम्भः प्रणयेऽपि च" इत्यमरः ॥ ५७ ॥

प्राप्तयोरप्राप्तिर्विप्रयोगस्तस्य द्वौ भेदौ—मानः प्रवासश्च, मानविप्रयोगोऽपि द्विविधः—प्रणयमान ईर्ष्यामानश्चेति ।

तत्र प्रणयमानः स्यात्कोपावसितयोर्द्वयोः ॥ ५८ ॥

प्रेमपूर्वको वशीकारः प्रणयः तद्भङ्गो मानः प्रणयमानः स च द्वयोर्नायकयोर्भवति तत्र नायकस्य यथोत्तररामचरिते—

"अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥"

नायिकाया यथा श्रीवाक्पतिराजदेवस्य—

"प्रणयकुपिता दृष्ट्वा देवीं ससंभ्रमविस्मित-
स्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् ।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥"

उभयोः प्रणयमानो यथा—

"पणअकुविआण दोह्णवि अलिअपसुत्ताण माणइन्ताणम् ।
णिच्चलणिरुद्धणीसासदिण्णअण्णाण को मल्लो ॥"

स्त्रीणामीर्ष्याकृतो मानः कोपोऽन्यासङ्गिनि प्रिये ।
श्रुते वानुमिते दृष्टे, श्रुतिस्तत्र सखीमुखात् ॥ ५९ ॥
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनकल्पितः ।
त्रिधानुमानिको, दृष्टः साक्षादिन्द्रियगोचरः ॥ ६० ॥

ईर्ष्यामानः पुनः स्त्रीणामेव नायिकान्तरसङ्गिनि स्वकान्ते उपलब्धे सत्यऽन्यासङ्गः श्रुतो वानुमितो दृष्टो वा ( यदि ) स्यात्, तत्र श्रवणं सखीवचनात्तस्या विश्वास्यत्वात् यथा ममैव—

नायकयोः=नायिकानायकयोरित्यर्थः । नायकस्य=नायकसमवेतः । नायिकाया =नायिकासमवेतः । उभयो.=नायिकानायकोभयसमवेतः ॥ ५८ ॥

१ "कोपावेशित" इति पाठान्तरम् ।
२ "प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः ।
निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्लः ॥" इति छाया ।

'मुग्धे त्वं नवनीतकल्पहृदया केनापि दुर्मन्त्रिणा
मिथ्यैव प्रियकारिणा मधुमुखेनास्मासु चण्डीकृता ।
किं खेतद्विमृश क्षणं प्रणयिनामेणाक्षि कस्ते हितः
किं धात्रीतनया वयं किमु सखी किं वा किमस्मत्सुहृत् ॥"

उत्स्वप्नायितो यथा रुद्रस्य—

"निर्मग्नेन मयाम्भसि स्मरभरादाली समालिङ्गिता
केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि ।
इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिणः
सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥"

भोगाङ्कानुमितो यथा—

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥"

गोत्रस्खलनकल्पितो यथा—

"केलीगोत्तक्खलणे विकुप्पए केअवं अआणन्ती ।
दुट्ठ उअसु परिहासं जाआ सच्चं विअ परुण्णा ॥"[1]

दृष्टो यथा श्रीमुकुलस्य—

"प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मित-
स्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् ।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥"

एषाम्—

यथोत्तरं गुरुः षड्भिरुपायैस्तमुपाचरेत् ।
साम्ना भेदेन दानेन नत्युपेक्षारसान्तरैः ॥ ६१ ॥

एषाम्=श्रुतानुमितदृष्टान्यसङ्गमसूचनानामुक्तानां मानानां मध्ये उत्तरोत्तरं मानो गुरु=द्वैगेन निवार्यो भवतीत्यर्थः । तम्=मानम् । उपाचरेत्=निवारयेत् ॥ ६१ ॥

---

१ "केलीगोत्रस्खलने विकुप्यति कैतवमजानन्ती ।
दुष्ट पश्य परिहासं जाया सत्यमिव प्ररुदिता ॥" इति च्छाया ।

तत्र प्रियवचः साम, भेदस्तत्सख्युपार्जनम् ।
दानं व्याजेन भूषादेः, पादयोः पतनं नतिः ॥ ६२ ॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् ।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ॥ ६३ ॥
कोपचेष्टाश्च नारीणां प्रागेव प्रतिपादिताः ।

तत्र प्रियवचः साम यथा ममैव—

'स्मितज्योत्स्नाभिस्ते धवलयति विश्वं मुखशशी
दृशस्ते पीयूषद्रवमिव विमुञ्चन्ति परितः ।
वपुस्ते लावण्यं किरति मधुरं दिक्षु तदिदं
कुतस्ते पारुष्यं सुतनु हृदयेनाद्य गुणितम् ॥'

यथा वा—

'इन्दीवरेण नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलैः स विधाय वेधाः
कान्ते कथं रचितवानुपलेन चेतः॥'

नायिकासखीसमावर्जनं भेदो यथा ममैव—

'कृतेऽप्याज्ञाभङ्गे कथमिव मया ते प्रणतयो
धृताः स्मित्वा हस्ते विसृजसि रुषं सुभ्रु बहुशः ।
प्रकोपः कोऽप्यन्यः पुनरयमसीमाद्य गुणितो
वृथा यत्र स्निग्धाः प्रियसहचरीणामपि गिरः ॥'

दानं व्याजेन भूषादेर्यथा माघे—

"मुहुरुपहसितामिवालिनादै-
र्वितरसि नः कलिकां किमर्थमेनाम् ।
अधिरजनि गतेन धाम्नि तस्याः
शठ कलिरेव महांस्त्वयाद्य दत्तः ॥"

पादयोः पतनं नतिर्यथा—

"णेउरकोडिविलग्गं चिहुरं दइअस्स पाअपडिअस्स ।
हिअअं माणपउत्थं उम्मोअं त्ति चिअ कहेइ ॥"[1]

---

१ 'नूपुरकोटिविलग्नं चिकुरं दयितस्य पादपतितस्य ।
हृदयं मानपदोत्थमुन्मुक्तमित्येव कथयति ॥' इति च्छाया ।

उपेक्षा तदवधीरणं यथा—

"किं गतेन नहि युक्तमुपैतुं नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा विप्रियाणि जनयन्ननुनेयः ॥"

रभसत्रासहर्षादे रसान्तरात्कोपभ्रंशो यथा ममैव—

'अभिव्यक्तालीकः सकलविफलोपायविभव-
श्चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम् ।
इतः पृष्ठे पृष्ठे किमिदमिति संत्रास्य सहसा
कृताश्लेषां धूर्तः स्मितमधुरमालिङ्गति वधूम् ॥"

अथ प्रवासविप्रयोगः—

कार्यतः संभ्रमाच्छापात्प्रवासो भिन्नदेशता ॥ ६४ ॥
द्वयोस्तत्राश्रुनिःश्वासकार्श्यलम्बालकादिता ।
स च भावी भवन् भूतस्त्रिधाद्यो बुद्धिपूर्वकः ॥ ६५ ॥

आद्य कार्यजः समुद्रगमनसेवादिकार्यवशप्रवृत्तौ बुद्धिपूर्वकत्वाद्भूतभविष्यद्वर्तमानतया त्रिविधः ।

तत्र यास्यत्प्रवासो यथा—

"होन्तपहिअस्स जाआ आउच्छणजीअधारणरहस्सम् ।
पुच्छन्ती भमइ घरं घरेसु पिअविरहसहिरीआ ॥"

गच्छत्प्रवासो यथामरुशतके—

"प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथवा
दिनकृति गते वास्तं नाथ त्वमद्य समेष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पगलज्जलैः ॥"

यथा वा तत्रैव—

"देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णे दृशौ
तामाशां पथिकस्तथापि किमपि ध्यात्वा चिरं तिष्ठति ॥"

यास्यत्प्रवासः—भविष्यत्कालिकगमनकर्तृप्रवासः । गच्छत्प्रवासः=वर्तमानकालिकगमनकर्तृप्रवासः ।

१ "भविष्यत्पथिकस्य जाया आयुःक्षणजीवधारणरहस्यम् ।
पृच्छन्ती भ्रमति गृहाद्गृहेषु प्रियविरहसहीका ॥" इति च्छाया ।

गतप्रवासो यथा मेघदूते—

"उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचिद्
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥"

आगच्छदागतयोस्तु प्रवासाभावादेष्यत्प्रवासस्य च गतप्रवासाऽविशेषात्त्रैविध्यमेव युक्तम् ।

**द्वितीयः सहसोत्पन्नो दिव्यमानुषविप्लवात् ।**

उत्पातनिर्घातवातादिजन्यविप्लवात् परचक्रादिजन्यविप्लवाद्वा बुद्धिपूर्वकत्वादेकरूप एव संभ्रमजः प्रवासः यथोर्वशीपुरूरवसोर्विक्रमोर्वश्यां यथा च कपालकुण्डलापहृतायां मालत्यां मालतीमाधवयोः ।

**स्वरूपान्यत्वकरणाच्छापजः सन्निधावपि ॥ ६६ ॥**

यथा कादम्बर्यां वैशंपायनस्येति ।

**मृते त्वेकत्र यत्रान्यः प्रलपेच्छोक एव सः ।**
**व्याश्रयत्वान्न शृङ्गारः, प्रत्यापन्ने तु नेतरः ॥ ६७ ॥**

यथेन्दुमतीमरणादजस्य करुण एव रघुवंशे, कादम्बर्यां तु प्रथमं करुण आकाशसरस्वतीवचनादूर्ध्वं प्रवासश्रृङ्गार एवेति ।

गतप्रवास.=गतस्य प्रवास. ।

एष्यत्प्रवासस्य=आगमिष्यत्प्रवासस्य । त्रैविध्यमित्यत्र प्रवासस्येति शेषः॥ ६५॥
द्वितीय.=संभ्रमजः ॥ ६६ ॥

स्वरूपान्यत्वकरणात्=स्वरूपान्यथाभावापत्त्या ।

व्याश्रयत्वात्=आलम्बनलक्षणस्याश्रयस्याभावात् आलम्बनस्य मरणेन विनष्टत्वात् शृङ्गारस्य चालम्बनं विनानुपपत्तेः, शोककरुणयोस्तु विनष्टस्यैवालम्बनत्वस्वीकारादिति भावः ।

प्रत्यापन्ने=सयोगाशायामुत्पन्नाया तु इतरः=करुणो न भवति किं तु विप्रलम्भशृङ्गार एवेत्यर्थः ॥ ६७ ॥

१ "निराश्रयात्" इति पाठान्तरम् ।

तत्र नायिकां प्रति नियमः—

प्रणयायोगयोरुत्का, प्रवासे प्रोषितप्रिया ।
कलहान्तरितेर्ष्यायां विप्रलब्धा च खण्डिता ॥ ६८ ॥

अथ संभोगः—

अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥ ६९ ॥

यथोत्तररामचरिते—

"किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
सपुलकपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥"

अथवा । "प्रिये किमेतत्—

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥"

यथा च ममैव—

'लावण्यामृतवर्षिणि प्रतिदिशं कृष्णागरुश्यामले
वर्षाणामिव ते पयोधरभरे तन्वाङ्गि दूरोन्नते ।
नासावंशमनोज्ञकेतकतनुभ्रूपत्रगर्भोल्लस-
त्पुष्पश्रीस्तिलकः सहेलमलकैर्भृङ्गैरिवापीयते ॥'[१]

चेष्टास्तत्र प्रवर्तन्ते लीलाद्या दश योषिताम् ।
दाक्षिण्यमार्दवप्रेम्णामनुरूपाः प्रियं प्रति ॥ ७० ॥

---

तत्र=उत्तमानादौ विप्रलम्भे वा । प्रणयायोगयोः=प्रणये सत्यऽयोगे उत्का भवतीत्यर्थः । विप्रलब्धाद्या अपि नायकेऽन्यासक्तत्वादिमत्या ईर्ष्या संभवतीतीर्ष्यायां विप्रलब्धा खण्डिता कलहान्तरिता चोक्ता । वासकसज्जाभिसारिकयोस्तु प्रियसान्निध्याभावेऽपि सद्यः संगमाशया वियोगदुःखं न भवतीति न ते विप्रयोगनायिके । स्वाधीनभर्तृका तु न वियुनेति अष्टानामपि व्यवस्थोक्ता विज्ञेया ॥ ६८ ॥

ताश्च सोदाहृतयो नायकप्रकाशे दर्शिताः ।

रमयेच्चाटुकृत्कान्तः कलाक्रीडादिभिश्च ताम् ।
न ग्राम्यमाचरेत्किंचिन्नर्मभ्रंशकरं न च ॥ ७१ ॥

ग्राम्यः संभोगो रङ्गे निषिद्धोऽपि काव्येऽपि न कर्तव्य इति पुनर्निषिध्यते यथा रत्नावल्याम्—

"स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन ।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥" इत्यादि ।

नायकनायिकाकैशिकीवृत्तिनाटकनाटिकालक्षणाद्युक्तं कविपरम्परावगतं स्वयमौचित्यसंभावनानुगुण्येनोत्प्रेक्षितं चानुसंदधानः सुकविः शृङ्गारमुपनिबध्नीयात् ।

अथ वीरः—

वीरः प्रतापविनयाध्यवसायसत्त्व-
मोहाविषादनयविस्मयविक्रमाद्यैः ।
उत्साहभूः स च दयारणदानयोगा-
त्त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः ॥ ७२ ॥

प्रतापविनयादिभिर्विभावितः करुणायुद्धदानाद्यैरनुभावितो गर्वधृतिहर्षामर्षस्मृतिमतिवितर्कप्रभृतिभिर्भावित उत्साहः स्थायी स्वदते=भावकमनोविस्तारानन्दाय प्रभवतीत्येष वीरः, तत्र दयावीरो यथा नागानन्दे जीमूतवाहनस्य, युद्धवीरो वीरचरिते रामस्य, दानवीरः परशुरामबलिप्रभृतीनाम्—" त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः " इति ।

" ग्रन्थिविमुक्तसंधि विकसद्वक्षःस्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलकुटीगम्भीरसामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ "

---

नर्मभ्रंशकरम्=क्रोधादिकं च न शृङ्गारे उपनिबध्नीयात् ।

"स्पृष्टस्त्वयैषः" इति न ग्राम्यसंभोगोदाहरणम् ।

वीररसं निरूपयति–वीर इत्यादिना । अत्र प्रतापादय उद्दीपनविभावाः ।

करुणेति–दयावीरे करुणा, युद्धवीरे रणः, दानवीरे दानमनुभाव इत्येवन्वयः ।

यथा च ममैव—

' लक्ष्मीपयोधरोत्सङ्गकुंकुमारुणितो हरेः ।
बलिरेव स येनास्य भिक्षापात्रीकृतः करः ॥ '

विनयादिषु पूर्वमुदाहृतमनुसंधेयम् । प्रतापगुणाऽऽवर्जनादिनापि वीराणां भावावैधं प्रायोवादः । प्रस्वेदरक्तवदननयनादिक्रोधानुभावरहितो युद्धवीरोऽन्यथा रौद्रः ।

अथ बीभत्सः—

बीभत्सः कृमिपूतिगन्धिवमथुप्रायैर्जुगुप्सैकभू-
रुद्वेगी रुधिरान्त्रकीकसवसामांसादिभिः क्षोभणः ।
वैराग्याज्जघनस्तनादिषु घृणाशुद्धोऽनुभावैर्वृतो
नासावक्त्रविकूणनादिभिरिहावेगार्तिशङ्कादयः ॥ ७३ ॥

अत्यन्ताहृद्यैः कृमिपूतिगन्धिप्रायविभावैरुद्भूतो जुगुप्सास्थायिभावपरिपोषणलक्षण उद्वेगी बीभत्सः यथा मालतीमाधवे—

---

विनयादयो नायकप्रकरणे उदाहृता इत्याह—विनयादिष्विति । प्रतापेति—तथा च प्रतापवीरो गुणवीरश्चेत्यपि वीरभेदाः संभवन्ति यथा पूर्वकालिकविद्वांसः।[1]
अन्यथा=प्रस्वेदादिसत्त्वे ॥ ७२ ॥

बीभत्समाह—बीभत्स इति, तत्र बीभत्सो त्रिविधः—कृमिपूतिगन्धिविभावैरुद्भावित उद्वेगी=मनोमालिन्यघृणादिकारी यथा—" उत्कृत्योत्कृत्य " इत्यत्र । रुधिरान्त्रकीकसादिविभावैरुद्भावितश्च क्षोभण.=भयमिश्रग्लानिकरः त्रिया भयंकरो यथा—"आन्त्रप्रोत " इत्यत्र । जघनस्तनादिषु वैराग्याद् या घृणा स शुद्धो बीभत्सो यथा—"लाला वक्त्रासव वेत्ति " इत्यत्रेतिविवेकः । नासावक्त्रविकूणनादिभिरनुभावैर्वृत', आवेगादयश्चात्र व्यभिचारिणो भवन्तीत्यन्वयः । विकूणनम्=विकृतविमुखीकरणम् ।

---

१ संस्कृतविद्याया यथा श्रीरङ्गाचार्यस्वामिन' श्रीकाशीनाथशास्त्रिण श्रीराजारामशास्त्रिणः परमप्रसिद्ध श्रीबालशास्त्रिण म. म. सी. आई. ई श्रीगङ्गाधरशास्त्रिणः । श्रीशिवकुमारशास्त्रिण श्रीसीतारामशास्त्रिण । श्रीअहोबलशास्त्रिण श्रीदामोदरशास्त्रिण श्रीमुखलालशास्त्रिण श्रीकाकारामशास्त्रिण' । संगीतविद्याया श्रीअमृतसेननायका श्रीरहीमसेननायका श्रीसुखसेननायका. । श्रीहैदरबक्सदानीनायका सआदतअलीखानायक, हदूखा हस्सूखा प्रभृतयश्च । बैजूनायकस्तानसेननायक इति तु जगत्त्रयप्रसिद्धमित्यलं विस्तरेण ।

" उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ "

रुधिरान्त्रवसाकीकसमांसादिविभावः क्षोभणो बीभत्सो यथा वीर-चरिते—

" आन्त्रप्रोतबृहत्कपालनलककूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतोच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ "

रम्येष्वपि रमणीयजघनस्तनादिषु वैराग्याद्घृणा शुद्धो बीभत्सो यथा—

" लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।
मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥ "

न चायं शान्त एव विरक्तः—यतो बीभत्समानो विरज्यते ।

अथ रौद्रः—

क्रोधो मत्सरवैरिवैकृतमयैः पोषोऽस्य रौद्रोऽनुजः
क्षोभः स्वाधरदंशकम्पभ्रुकुटिस्वेदास्यरागैर्युतः ।
शस्त्रोल्लासविकत्थनांसधरणीघातप्रतिज्ञाग्रहै-
रत्रामर्षमदौ स्मृतिश्चपलतासूयौग्र्यवेगादयः ॥ ७४ ॥

मात्सर्यविभावो रौद्रो यथा वीरचरिते—

" त्वं ब्रह्मवर्चसधरो यदि वर्तमानो
यद्वा स्वजातिसमयेन धनुर्धरः स्याः ।

---

" लालाम् " इत्यत्र निरुद्धो विरक्तः शान्त एवेति न वक्तव्यं येन शान्तस्य विषयापहारः स्यात् किं तु—बीभत्समानो विरज्यते वैराग्यानन्तरं च शान्तो भवतीति वैराग्यादग्रे शान्तिरिति विषयभेदः । अत्र 'विरक्तश्च शाम्यति' इति शेषः ॥ ७३ ॥

रौद्रं निरूपयति—क्रोध इति । वैरिवैकृतम्=वैरिकृतापकारस्तन्मयैः तत्प्रधानैर्विभावैरस्य=क्रोधस्य यः पोषः स एव रौद्रः रौद्रानुजश्च क्षोभः । अस्य स्वाधरदंशादयोऽनुभावाः, अमर्षादयो व्यभिचारिणः ।

उग्रेण भोस्तव तपस्तपसा दहामि
पक्षान्तरस्य सदृशं परशुः करोति ॥ ”

वैरिवैकृत्यादिर्यथा वेणीसंहारे—

“ लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ? ॥ ”

इत्येवमादिविभावैः प्रस्वेदरक्तवदननयनाद्यनुभावैरमर्षादिव्यभिचारिभिः क्रोधपरिपोषो रौद्रः परशुरामभीमसेनदुर्योधनादिव्यवहारेषु वीरचरितवेणीसंहारादेरनुगन्तव्यः ।

अथ हास्यः—

**विकृताकृतिवाग्वेषैरात्मनोऽथ परस्य वा ।**
**हासः स्यात्परिपोषोऽस्य हास्यस्त्रिप्रकृतिः स्मृतः ॥ ७५ ॥**

आत्मस्थान् विकृतवेषभाषादीन् परस्थान् वा विभावानऽवलम्बमानो हासस्तत्परिपोषात्मा हास्यो रसो द्व्यधिष्ठानो भवति स चोत्तममध्यमाधमप्रकृतिभेदात्षड्विधः ।

आत्मस्थो यथा रावणः—

“जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं
हारो वक्षसि यज्ञसूत्रमुचितं क्लिष्टा जटाः कुन्तलाः ।
रुद्राक्षैः सकलैः सरत्नवलयं चित्रांशुकं वल्कलं
सीतालोचनहारि कल्पितमहो रम्यं वपुः कामिनः ॥”

परस्थो यथा—

“भिक्षो मांसनिषेवणं प्रकुरुषे ? किं तेन मद्यं विना
किं ते मद्यमपि प्रियम् ? प्रियमहो वाराङ्गनाभिः सह ।
वेश्या द्रव्यरुचिः कुतस्तव धनम् ? द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतः ? नष्टस्य कान्या गतिः ॥”

---

इत्येवमादिभिः=लाक्षागृहप्रवेशनादिभिः ॥ ७४ ॥

हास्यं निरूपयति–विकृतेति । त्रिप्रकृतिरिति–उत्तममध्यमाऽधमभावेन त्रिधा प्रकृतिः=आश्रयो यस्य स त्रिप्रकृतिः ।

आत्मस्थपरस्थभेदेन द्व्यधिष्ठानः । सः=द्विविधोऽपि ॥ ७५ ॥

स्मितमिह विकासिनयनम्, किंचिल्लक्ष्यद्विजं तु हसितं स्यात् ।
मधुरस्वरं विहसितम्, सशिरःकम्पमिदमुपहसितम् ॥ ७६ ॥
अपहसितं सास्राक्षम्, विक्षिप्ताङ्गं भवत्यतिहसितम् ।
द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमशः ॥ ७७ ॥

उत्तमस्य स्वपरस्थविकारदर्शनात् स्मितहसिते, मध्यमस्य विहसितोपहसिते, अधमस्याऽपहसितातिहसिते, उदाहृतयः स्वयमुत्प्रेक्ष्याः । व्यभिचारिणश्चास्य—

निद्रालस्यश्रमग्लानिमूर्छाश्च सहचारिणः (व्यभिचारिणः) ।

अथाद्भुतः—

अतिलोकैः पदार्थैः स्याद्विस्मयात्मा रसोऽद्भुतः ॥ ७८ ॥
कर्मास्य साधुवादाश्रुवेपथुस्वेदगद्गदाः ।
हर्षावेगधृतिप्राया भवन्ति व्यभिचारिणः ॥ ७९ ॥

लोकसीमातिवृत्तपदार्थवर्णनादिविभावितः साधुवादाद्यनुभावपरिपुष्टो विस्मयः स्थायिभावो हर्षावेगादिभावितो रसोऽद्भुतः यथा—

"दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्धत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्याप्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमसौ नाद्यापि विश्राम्यति ॥"

इत्यादि ।

अथ भयानकः—

विकृतस्वरसत्त्वादेर्भयभावो भयानकः ।
सर्वाङ्गवेपथुस्वेदशोषवैचित्र्य[1]लक्षणः ।
दैन्यसंभ्रमसंमोहत्रासादिस्तत्सहोदरः ॥ ८० ॥

रौद्रशब्दश्रवणाद्रौद्रसत्त्वदर्शनाच्च भयस्थायिभावप्रभवो भयानको रसः तत्र सर्वाङ्गवेपथुप्रभृतयोऽनुभावाः दैन्यादयस्तु व्यभिचारिणः, भयानको यथा—

अतिलोकैः=अलौकिकैः, एतदेवोक्तम्—" लोकसीमातिवृत्त " इति ।

१ " वैवर्ण्य " इत्यपि पाठः ।

"शस्त्रमेतत्समुत्सृज्य कुब्जीभूय शनैः शनैः ।
यथातथागतेनैव यदि शक्नोपि गम्यताम् ॥"

यथा च रत्नावल्यां प्रागुदाहृतम्—"नष्टं वर्षवरैः" इत्यादि ।

यथा च—

"स्वगेहात्पन्थानं तत उपचितं काननमथो
गिरिं तस्मात्सान्द्रद्रुमगहनमस्मादपि गुहाम् ।
तदन्वङ्गान्यङ्गैरभिनिविशमानो न गणय-
त्यरातिः कालीये तव विजययात्राचकितधीः ॥"

अथ करुणः—

इष्टनाशादनिष्टाप्तौ शोकात्मा करुणोऽनु तम् ।
निःश्वासोच्छ्वासरुदितस्तम्भप्रलपितादयः ॥ ८१ ॥
स्वापापस्मारदैन्याधिमरणालस्यसंभ्रमाः ।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ॥ ८२ ॥

इष्टस्य बन्धुप्रभृतेर्विनाशादनिष्टस्य तु बन्धनादेः प्राप्त्या शोकप्रकर्षजः करुणः, तमन्विति तदनुभावनिःश्वासादिकथनम्, व्यभिचारिणश्च स्वापापस्मारादयः । इष्टनाशात्करुणो यथा कुमारसंभवे—

" अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ "

इत्यादि रतिप्रलापः । अनिष्टावाप्तेः[1] सागरिकाया बन्धनाद्यथा रत्नावल्याम् ।

प्रीतिभक्त्यादयो भावा मृगयाक्षादयो रसाः ।
हर्षोत्साहादिषु स्पष्टमन्तर्भावान्न कीर्तिताः ॥ ८३ ॥

स्पष्टम् ।

---

करुणं निरूपयति—इष्टनाशादिति । अनु तम्—तदनन्तरं निःश्वासादयः करुणानुभावाः—तदनन्तरं जायमानानामेवानुभावपदार्थत्वादित्यर्थः । शोक आत्मा स्थायी यस्येति शोकात्मा । इष्टनाशादयश्च विभावाः, स्वापादयो व्यभिचारिणः ॥ ८२ ॥

सागरिकाबन्धनं तु करुणोदाहरणं न हृदयगमम् ।

---

१ " आप्तेः " इति पाठान्तरम् ।

पट्त्रिंशद्भूषणादीनि सामादीन्येकविंशतिः ।
लक्ष्यसंध्यन्तराख्यानि सालङ्कारेषु तेषु च ॥ ८४ ॥

" विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च " इत्येवमादीनि पट्त्रिंशत् ( विभूषणादीनि ) काव्यलक्षणानि " साम भेदः प्रदानं च " इत्येवमादीनि संध्यन्तराण्येकविंशतिरुपमादिष्वलङ्कारेषु हर्षोत्साहादिषु चान्तर्भावान्न पृथगुक्तानि ।

॥ इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके रसविचारो नाम चतुर्थः प्रकाशः समाप्तः ॥

---

भूषणादीनीति–तदुक्तं भरतेन षोडशे–

"विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च ।
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादोऽतिशयश्च हेतुः ॥
सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानयाच्ञाप्रतिषेधपृच्छादृष्टान्तनिर्भासनसंशयाश्च ॥
आशीः प्रियं वै कपटं क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव ।
अथानुवृत्तिर्ह्युपपत्तियुक्ती कार्यानुनीती परिदेवनं च ॥
पट्त्रिंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसंमतानि ।
काव्येषु भावार्थमतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु ॥" इति ।

सामादीनीति–तदुक्तं भरतेनैकोनविंशाध्याये—

"संध्यन्तराणि वक्ष्यामि त्वर्थोपक्षेपकाणि च ।
साम भेदस्तथा दण्डः प्रदानं वध एव च ॥
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ।
साहसं च भयं चैव ह्रीर्माया क्रोध एव च ॥
ओजः संवरणं भ्रान्तिस्तथा हेत्ववधारणम् ।
दूतो लेखस्तथा स्वप्नश्चित्रं मद इति स्मृतम् ॥
संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः ॥" इति ।

तत्र विभूषणादीनामुपमादिषु सामादीनां हर्षादिष्वन्तर्भाव इत्यर्थः । मूले "एष्वन्तर्भावान्न कीर्तिताः" इतिपूर्वोक्तमनुवर्तनीयम् । तेषु=हर्षादिषु ॥ ८४ ॥

---

१ " लक्ष्मसंध्यन्तराख्यानि " इत्यपि पाठः ।

रम्यं जुगुप्सितमुदारमथापि नीच-
मुग्रं प्रसादि गहनं विकृतं च वस्तु ।
यद्वाप्यवस्तु कविभावकभाव्यमानं
तन्नास्ति यन्न रसभावमुपैति लोके ॥ ८५ ॥
विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः ।
आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत् ॥८६॥

॥ इति श्रीविष्णुसूनोर्धनञ्जयप्रणीतं दशरूपकं
समाप्तम् ॥

---

रम्यमिति—लोके तत् किमपि नास्ति यद् भावकेन कविना भाव्यमानं रस-भावम्=रसत्वम्=रसपर्यकं न स्यादित्यर्थः ॥ ८५ ॥

॥ इति चतुर्थः प्रकाशः ॥

इति पञ्चनदीयपण्डितसुदर्शनाचार्यशास्त्रिप्रणीता
सावलोकदशरूपकस्य प्रभाख्या व्याख्या
समाप्ता

---



# उदाहृतश्लोकानामनुक्रमणिका

॥ श्रीः ॥

अथ

# टीकाकारकृता

## शिवाष्टपदी

भजविषमविलोचनमीशम्,
चन्द्रकिरणसमशुभ्रसुदर्शनशैलनितम्बनिवेशम् ॥ ध्रु० ॥
निटिलविलोचनलोचनतः कृतभस्मशरीररतीशम् ।
हिमनिधिसानुसमाधिसमञ्चितचन्द्रधरं धरणीशम् ॥ १ ॥
यामवतीपतिपूर्वकलापरिकल्पितविशालललाटम् ।
हैमवतीपरिरम्भपवित्रितचित्रितवक्षकपाटम् ॥ २ ॥
व्यालवलयकमनीयकराम्बिनभूषितहस्तसरोजम् ।
शैलसुतावदनेन्दुविलोचनचञ्चलहृदयमनोजम् ॥ ३ ॥
विष्णुपदीपरिभोगपरिष्कृततुङ्गकपर्दकतल्पम् ।
गानकलाकुतुकेन नवीकृतताण्डवकल्पमनल्पम् ॥ ४ ॥
भक्तजननमरणादिमहाज्वरमोचनकौशलवेषम् ।
त्रिभुवनमण्डलमण्डनपण्डितनन्दितपादविशेषम् ॥ ५ ॥
विष्णुमतीयतृतीयविचक्षणवल्लभवादनिदानम् ।
चाटुकथाचातुर्यनियन्त्रितगिरिजामानसमानम् ॥ ६ ॥
संहृतसागरमथनविनिस्सृतदारुणदारदशोषम् ।
मन्मथविशिखभुजङ्गविगाहतिसंहतिसमवितशोषम् ॥ ७ ॥
गीतमिदं हरहर्षकरं किल मुग्धयतु पुरस्थितदासम् ।
अष्टपदीनिपुणाय पिनाकी वितरतु निजपदवासम् ॥ ८ ॥

म. म. सी. आई. ई. श्रीगङ्गाधरशास्त्रिणामन्तेवासी
पञ्चनदीयः
सुदर्शनाचार्यशास्त्री,
काशी.

## पञ्चनदीयपण्डितसुदर्शनाचार्यशास्त्रिनिर्मितमुद्रित-पुस्तकानां सूची—